श्रीहरिः

# निवेदनम्

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः॥

महामहिममहर्षिद्वैपायनप्रत्तोपायनमिवेदं तदीयप्रतिभाभारततं महाभारतं न केवलं महाभारतमेव वर्षमनुगृह्णाति स्वीयसुधावर्षेण नव्यभव्यगुणोत्कर्षेण च, प्रत्युत सकलां वसुमतीमेवासुमतीं विदधदान्वीक्षिक्यादिचतुर्दशविद्याविषयोपपादनमहिम्ना व्याप्नोतितरां नितराम्। ग्रन्थरत्नमिदमनिवार्यौदार्यप्रभृतिगुणगणगुम्फितार्यसंस्कृतिसमर्पणं दर्पणमिव दृक्संनिधिं नीयते। चतुर्वर्गप्राप्त्युपायप्रदर्शनं दर्शनमिव दरीदृश्यते। कृत्याकृत्यप्रवृत्तिनिवृत्त्यनुशासनपरं शास्त्रमिव च श्रद्धातिशयेन शोश्रूय्यते सुकृतिभिः। इह चातुर्वर्ण्यं वर्ण्यते चातुराश्रम्यं चाकर्ण्यते। इदं बहुविधविभावानुभावसंचारिभावैर्नवनवरसाभिव्यञ्जकतया सुधासहस्रगुणमाधुर्यातिरेकसम्भाव्यमभिनवं काव्यमिव चास्वाद्यते सततं सादरं सहृदयैः। इह स्त्रीशूद्रद्विजबन्धुविषयककृपापारवश्यं गतेन भगवता व्यासेन विहितं साङ्गवेदार्थोपबृंहणं सद्धर्मसमभ्यर्हणं गर्हणीयगर्हणं च पौनःपुन्येनाक्षिलक्ष्यीक्रियते। वेदार्थसारसंग्रहणादेव महाभारतं कार्ष्णवेदतया व्यपदिश्यते श्रुतावप्यस्य पञ्चमवेदताऽऽम्नायते। नरनारायणीयविजयानुवर्णनपरमिदं महाभारतं काव्यं सदपि न केवलं कविकल्पनाजल्पनारमणीयतामावहति, प्रत्युत यथार्थवृत्तप्रतिपादनपरं सर्वतोभावेन सत्यमितिवृत्तमिति नात्र मनागपि संशेतव्यम्। तथा चोपाक्रान्तमुपक्रमे जयो नामेतिहासोऽयमिति।

महोदधिमन्थनतश्चतुर्दशरत्नानि प्रादुरभूवन्निति जनश्रुतिः श्रुतिपदवीमुपायाता, परंतु महाभारतोदधेरालोडनतः पारेसंख्यमाविर्भवन्ति गुणरत्नानि नित्यनूतनानीति कोऽस्य महतो महत्त्वं प्रवक्तुं पारयेत। सप्तशतश्लोकरत्ननिधिरविगीता श्रीमद्भगवद्गीता महाभारतस्यान्यतमं रत्नं संराजते, यदीयं गाम्भीर्यं महान्तमपारमकूपारमप्यतिशेते। अद्यावधि यानि यानि सहृदयहृदयाह्लादीन्यनवद्यपद्यमयानि काव्यानि रससिद्धिं प्रसिद्धिं चोपगतानि तानि तानि महाभारतमेवोपजीवन्ति स्वात्मलाभाय। महाभारतानुगृहीता एव विषया अन्यत्रोपवर्ण्यन्ते। ये नेह निबद्धास्ते न क्वचिदप्यन्यत्राप्युपलभ्यन्ते। तथा चोक्तं 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचिदिति'। महाभारतेनैव धर्मविजयः सडिण्डिमघोषमुद्घोष्यते—'यतो धर्मस्ततो जय इति।' यः पार्थ इवापार्थपुरुषार्थाभिमानमुत्सृज्य

सर्वात्मानं श्रीकृष्णं सर्वात्मनोपाश्रितः स्वीयजीवनरथरश्मींस्तदीयकराम्बुजयोः समर्पयेत् स एवेह निखिलानरातीन् पराजित्य विजयतेतमां तमेव चान्ते सच्चिद्घनरसमूर्तिं पुण्यमनोरथपूर्तिं मनोऽभिरामं श्यामसुन्दरं श्रीकृष्णं समुपैष्यतीति महाभारतस्य महानुपदेशः सर्वैरेव मनसि निधातव्यः ।

संस्कृतवाङ्मयस्यानुपममद्वितीयं च ग्रन्थरत्नमिदं विषयगाम्भीर्येण विपुलकलेवरभरेण महतां भरतानां जन्मादि-वृत्तान्तोपवर्णनेन च महाभारताख्यां समुपालभतेत्यादावेव पर्वणि निरुक्तम् । तदिदं सुरभारतीलीलानिकेतनकेतनमिव महाभारतं भारतीयसाहित्यसदनं समलंकरोति, समलंकृतमप्यन्तःकरणमध्येतॄणाममलं करोतीति नापरोक्षं प्रेक्षावताम् । तदेवेदानीं चिरादागृह्णतां सतां सुहृदामनुरोधेनास्माभिर्महतो भारतस्य महत्त्वं वितन्वानं महाभारतं प्रकाशयितुं प्रयत्नः समारब्धः । भगवतोऽकारणकरुणावरुणालयस्य परमानुग्रहेण महाभारतस्य मूलमात्रस्याद्यो द्वितीयस्तृतीयश्चेति भागत्रयं प्रकाशमुपनीतं साम्प्रतमनुशासनाश्वमेधिकाश्रमवासिकमौसलमहाप्रस्थानस्वर्गारोहणाभिधपर्वषट्कात्मकमिदं महाभारतस्य मूलमात्रं संस्करणं चतुर्थभागरूपं तत्रभवतां भवतामनुग्राहकाणां ग्राहकमहोदयानां करकमलेषु सानन्दं समुपह्रियते । भागेऽस्मिन्ननुशासनपर्वणि विविधरूपाणां दानादिधर्माणां निरूपणं बहुविधाभिराख्यायिकाभिरतिशयवैशद्येनातिथि-समभ्यर्हणं स्वामिभक्तस्य दयालोरुत्कर्षो दैवमपेक्ष्य पुरुषार्थस्य प्राबल्यं ब्राह्मणाय दातुं प्रतिज्ञाय दानाकरणे ब्राह्मण-धनापहरणे च दोषः, लक्ष्म्यानुगृहीतानां स्त्रीपुरुषस्थानानां निर्देशः, कृतघ्नस्य गतिर्महादेवस्य माहात्म्यम्, शिवसहस्र-नामस्तोत्रं श्रीगङ्गाया विभिन्नतीर्थानां च माहात्म्यम्, शरणागतरक्षणं ब्राह्मणमहत्त्वं कन्याविवाहविषयको विचारो दौहित्रादीनामुत्तराधिकारस्य मीमांसा गवां माहात्म्यं भूमिसुवर्णान्नजलतिलशकटगृहदीपप्रभृतीनां दानस्य महत्त्वं श्राद्धविषयककृत्याकृत्यविमर्शो गृहस्थधर्मरहस्यं विभिन्नकर्मणां फलानि श्रीकृष्णस्य महत्त्वं श्रीविष्णु-सहस्रनामस्तोत्रं नित्यस्मरणीयानां देवनदीपर्वतर्षिनृपाणां नामकीर्तनस्य माहात्म्यं भीष्मस्य स्वर्गारोहणं तदीयान्त्येष्टि-संस्कारवृत्तान्तं चेत्यादयो बहवो विषया भूयो भूयोऽनुवर्णिताः । आश्वमेधिकपर्वणि संवर्तमरुत्तीयोपाख्यानमर्जुनायश्री-कृष्णकर्तृकोऽनुगीताधर्मोपदेशोऽश्वमेधीयाश्वसंरक्षणपरस्यार्जुनस्य बहुषु संग्रामेषु विजयोपलब्धेरनुवर्णनं युधिष्ठिराश्वमेधयज्ञ-सम्पादनं वैष्णवधर्मोपदेशश्चेत्यादयो विषया वैशद्येन वर्णिताः । आश्रमवासिकपर्वणि कुन्तीगान्धारीसहितधृतराष्ट्रस्य विदुरस्य च तपोहेतुकं वने गमनं तत्र च महर्षिव्यासस्यानुग्रहेण तपःप्रभावेण च गङ्गासलिलतः कुरुक्षेत्रे मृतानां कौरवपाण्डवपक्षीयवीराणां पुनः पूर्वशरीरेण सह प्राकट्यं धृतराष्ट्रादिभिस्तेषां प्रत्यक्षदर्शनं तैः सह वार्तालापादि-सुखस्यानुभवनं च; तदनु धृतराष्ट्रादीनां तपांसि परमगतिलाभश्च, विदुरस्य युधिष्ठिरे प्रवेशः संजयस्य च हिमालये गमनम्; मौसले महर्षीणां शापाद् यदुवंशसंहारोऽर्जुनकर्तृकं मृतानामन्त्येष्टिसम्पादनं जीवतां च यदुकुलस्त्रीबालका-नामाश्रयप्रदानम्; महाप्रस्थानिके पाण्डवानां महाप्रस्थानं मार्गे पाञ्चालीप्रभृतीनां पर्यायेण निपतनं युधिष्ठिरस्य सशरीरस्य स्वर्गे गमनम्; स्वर्गारोहणपर्वणि युधिष्ठिरेण मायामयस्य नरकस्य दर्शनं मन्दाकिन्यां मर्त्यतनुं परित्यज्य दिव्यलोके गमनं तत्र श्रीकृष्णार्जुनादीनां दर्शनं च, भीष्मप्रभृतीनां स्वस्वमूलस्वरूपे विलयनं महाभारतस्योपसंहारो माहात्म्यं चेत्येतेषां विषयाणां वर्णनमुपलभ्यते । अतो महाभारतस्य सर्वोत्कृष्टोऽयं भूरिभागधेयो भागः । हिंदीभाषयानूदितं समूलं संस्करणं यदिह प्रतिमासं प्रकाश्यते स्म तत एव मूलमात्रं निष्कृष्य पृथक् प्रख्यातिं नीतोऽयं भागः । एवं भागचतुष्टय-समलंकृतस्य सम्पूर्णमहाभारतस्य प्रकाशनमिदानीं भगवतः परमानुग्रहेण पूर्णतामगादिति सानन्दं सूच्यते ।

अथेदानीं पाठभेदप्राचुर्यं प्रति ध्यानमाकृष्यते सुधियाम् । दाक्षिणात्योदीच्यमहाभारतपुस्तकेषु पाठास्तु बहुधा वेभिद्यन्त एव; प्रायेण पञ्चदशसहस्राणां श्लोकानां न्यूनाधिक्यं चाप्यवलोक्यते, अस्माभिस्तूदीच्यपुस्तकानां तत्रापि नीलकण्ठनिर्मितभावदीपदीपितानामेव पाठो यद्यपि मुख्यतयाङ्गीकृतस्तथापि क्वचित्क्वचिदुपयोगीनि पाठान्तराण्यप्यङ्गीकृत्य पाठसंशोधनं व्यधायि । दाक्षिणात्यपुस्तकेषूपलभ्यमानानामतिरिक्तश्लोकानामप्युपयोगिनो भागा ग्रन्थेऽस्मिन् यथास्थानं ( ) कोष्ठकबद्धाः संनिवेशिता अनूदिताश्चान्यस्मिन् संस्करणे—इति वेदनीयं विद्वद्भिः । प्रतिपर्वगतोदीच्यदाक्षिणात्य-समष्टिश्लोकसंख्याधोनिर्दिष्टरीत्या ज्ञातव्या—

# प्रतिपर्वगतसमष्टिश्लोकसंख्यासूचिका

| | अनुष्टुप्छन्दसां श्लोकसंख्या | अन्येषां बृहतां छन्दसां श्लोकसंख्या | बृहतां छन्दसामक्षराणि द्वात्रिंशदक्षरात्मकानुष्टुभा विभज्य परिगणितानां श्लोकानां संख्या | गद्यछन्दसां श्लोकसंख्या | सर्वेषां योगाः |
|---|---|---|---|---|---|
| अनुशासनपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | ७३५८॥ | ( ३५०॥ ) | ४८१।।।= | | ७८४०।= |
| अनुशासनपर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | १९५४ | ( १२ ) | १६॥ | | १९७०॥ |

अनुशासनपर्वणि सम्पूर्णाः श्लोकाः ९८१०।।।≈

| | | | | | |
|---|---|---|---|---|---|
| आश्वमेधिकपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | २७४७॥ | ( १२२॥ ) | १६८।≡ | | २९१५।।।≡ |
| आश्वमेधिकपर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | १२६५ | ( २१ ) | २८।।।= | | १२९३।।।= |

आश्वमेधिकपर्वणि सम्पूर्णाः श्लोकाः ४२०९।।।-

| | | | | | |
|---|---|---|---|---|---|
| आश्रमवासिकपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | १०६१ | ( ३४ ) | ४६।।। | | ११०७।।। |
| आश्रमवासिकपर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | १॥ | ... | ... | | १॥ |

आश्रमवासिकपर्वणि सम्पूर्णाः श्लोकाः ११०९।

| | | | | | |
|---|---|---|---|---|---|
| मौसलपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | २६० | ( ३० ) | ४१। | | ३०१। |
| मौसलपर्वणि दाक्षिणात्यपाठमनुसृत्य गृहीताः श्लोकाः | ३॥ | ... | ... | | ३॥ |

मौसलपर्वणि सम्पूर्णाः श्लोकाः ३०४।।।

| | | | | | |
|---|---|---|---|---|---|
| महाप्रस्थानिकपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | १०१ | ( १० ) | १३।।। | | ११४।।। |

महाप्रस्थानिकपर्वणि सम्पूर्णाः श्लोकाः ११४।।।

| | | | | | |
|---|---|---|---|---|---|
| स्वर्गारोहणपर्वण्युदीच्यपाठमनुसृत्य गृहीताः श्लोकाः | २१४॥ | ( ३ ) | ४= | | २१८॥= |

स्वर्गारोहणपर्वणि सम्पूर्णाः श्लोकाः २१८॥=

संस्करणेऽस्मिन्नशुद्धिनिरासाय नितरामवधाने दत्तेऽपि चेतश्चाञ्चल्यात् प्रमादादल्पज्ञत्वाद्वाधुनाऽप्यशुद्धयोऽव- शिष्टा भवेयुरिति सम्भाव्यते। तदर्थं चात्यर्थं क्षमाभ्यर्थनपुरःसरं विद्वांसोऽनुरोध्यन्ते तत्सूचनाप्रदानानुग्रहाय, यतोऽनन्तर- भाविनि संस्करणे तासामपि निरासार्थं प्रयासो विधीयेतेति शुभम् ।

ॐ श्रीपरमात्मने नमः

# श्रीमहाभारतस्थविषयाणामनुक्रमः


अध्याये विषयाः पृष्ठाङ्काः

## अनुशासनपर्वणि

### ( दानधर्मपर्वणि )

१–युधिष्ठिरं सान्त्वयितुं भीष्मेण गौतमीव्याधसर्पमृत्युकालानां संवादस्योपस्थापनम् ... १
२–प्रजापतेर्मनोर्वंशस्य वर्णनम्; अग्निपुत्रेण सुदर्शनेनातिथ्यधर्मं पालयता मृत्योः पराजयः ४
३–विश्वामित्रेण कथं ब्राह्मण्यं प्राप्तमिति युधिष्ठिरस्य प्रश्नः ... ... ६
४–आजमीढवंशवर्णनं विश्वामित्रस्य जन्मकथा तत्पुत्राणां नामानि च ... ... ७
५–स्वामिभक्तस्य दयालोरुत्कर्षं सूचयितुमिन्द्रशुकसंवादस्योल्लेखः ... ... ८
६–दैवापेक्षया पुरुषार्थस्य श्रेष्ठतायाः प्रतिपादनम् ९
७–कर्मफलानां वर्णनम् ... ... ११
८–उत्तमब्राह्मणानां माहात्म्यम् ... ११
९–ब्राह्मणाय किञ्चिद् दातुं प्रतिज्ञाय तददानात् तद्धनापहरणाच्च दोषः प्राप्यत इति प्रतिपादयितुं जम्बुकवानरसंवादस्योल्लेखो ब्राह्मणेभ्यो दानस्य महत्त्वं च ... ... १२
१०–अनधिकारिणं प्रत्युपदेशेन देशिकस्यैव हानिरिति विषये शूद्रतपस्विब्राह्मणयोः कथा ... १३
११–लक्ष्म्या विनाशाविनाशार्हाणां पुरुषस्त्रीस्थानानां वर्णनम् ... ... १५
१२–स्त्रीपुरुषयोः संयोगे स्त्रिय एव सुखाधिक्यमिति सूचयितुं भङ्गास्वनोपाख्यानम्; कृतघ्नस्य गतेः प्रायश्चित्तस्य च वर्णनम् ... ... १६
१३–वाङ्मनःकायजानां पापानां परित्यागस्योपदेशः ... १९
१४–भीष्मस्याज्ञया भगवता श्रीकृष्णेन युधिष्ठिरं प्रति कथ्यमानायां शिवमाहात्म्यकथायामुपमन्युना महादेवस्य स्तुतिप्रार्थनापूर्वकं तद्दर्शनवरप्राप्त्योरुल्लेखः स्वयं कृतस्य शिवदर्शनस्य कथनं च ... २४
१५–उमामहेश्वरकर्तृकं श्रीकृष्णाय वरप्रदानमुपमन्युना महादेवमहिम्नो वर्णनं च ... ३५
१६–उपमन्युश्रीकृष्णसंवादः, तण्डिकृता महादेवस्य स्तुतिः प्रार्थना तत्फलं च ... ... ३६
१७–शिवसहस्रनामस्तोत्रं तत्पाठस्य फलं च ... ३८
१८–शिवसहस्रनामपाठमहिमा, महर्षिभिः शिवकृपयाभीष्टसिद्धिविषयकस्य स्वस्वानुभवस्य प्रकाशनं श्रीकृष्णकर्तृकं शिवमहिम्नो वर्णनं च ४२
१९–वदान्यमुनिप्रेरणयाष्टावक्रस्योत्तरदिशं प्रति प्रस्थानं पथि कुबेरेण तस्य स्वागतसमारम्भः स्त्रीरूपिण्योत्तरदिशा सहाष्टावक्रस्य संवादश्च ... ४५
२०–अष्टावक्रस्योत्तरदिशा सह संवादः ... ४७
२१–अष्टावक्रस्योत्तरदिशा सह संवादः; स्वगृहं प्रत्यागतस्याष्टावक्रस्य मुनिकन्यया सह संवादः ४८
२२–युधिष्ठिरस्य विविधधार्मिकप्रश्नानामुत्तरं श्राद्धदानयोरुत्तमपात्राणां लक्षणं च ... ४९
२३–दैवे पित्र्ये च केतनानर्हब्राह्मणानां नरकस्वर्गगामिनां नराणां च लक्षणानां वर्णनम् ... ५२
२४–ब्रह्महत्यासदृशपापानां निरूपणम् ... ५५
२५–विभिन्नतीर्थानां माहात्म्यवर्णनम् ... ५५
२६–श्रीगङ्गामाहात्म्यवर्णनम् ... ५७
२७–ब्राह्मणत्वोपलब्धये तपः कुर्वतो मतङ्गस्येन्द्रेण सह वार्तालापः ... ... ६०
२८–ब्राह्मणत्वप्राप्तेराग्रहं विहाय वरान्तरप्रार्थनायेन्द्रेण मतङ्गस्य प्रबोधनम् ... ... ६१
२९–मतङ्गकर्तृकं तपस्तस्मा इन्द्रेण वरप्रदानम् ... ६२
३०–वीतहव्यतनयैः सह काशिराजानां दारुणं युद्धं प्रतर्दनकर्तृकस्तेषां वधो भृगूक्त्या वीतहव्यस्य ब्राह्मणत्वप्राप्तिश्च ... ... ६२
३१–नारदेन पूज्यानां लक्षणस्य तेषां समादरेण सम्भाव्यमानानां गुणानां च वर्णनम् ... ६४
३२–उशीनराभिधानेन वृषदर्भेण शरणागतस्य कपोतस्य संरक्षणं तत्पुण्यप्रभावेणाक्षयलोकस्योपलब्धिश्च ... ... ६५
३३–ब्राह्मणमहत्त्ववर्णनम् ... ... ६६
३४–श्रेष्ठब्राह्मणानां प्रशंसा ... ... ६७
३५–ब्रह्मणा ब्राह्मणमहत्त्वस्य वर्णनम् ... ६८
३६–ब्राह्मणप्रशंसायामिन्द्रशम्बरासुरसंवादः ... ६९
३७–दानपात्रपरीक्षा ... ... ६९
३८–पञ्चचूडाभिधयाप्सरसा नारदं प्रति नारीदोषाणां वर्णनम् ... ... ७०
३९–स्त्रीणां संरक्षणविषये युधिष्ठिरस्य प्रश्नः ... ७१
४०–भार्गवेण विपुलेन गुरुपत्नीशरीरे प्रविश्य तस्या रक्षाकरणम् ... ... ७१
४१–विपुलेनेन्द्राद् गुरुपत्न्याः संरक्षणं गुरोर्वरप्राप्तिश्च ७३
४२–विपुलेन गुरोराज्ञया दिव्यपुष्पमानीय तस्मै तस्य दानं स्वकृतदुष्कर्मणः स्मरणं च ... ७४

| अध्याये विषयाः | पृष्ठाङ्काः |
|---|---|
| ४३–देवशर्मणा विपुलस्य निर्दोषतां प्रतिपाद्य तस्मै सान्त्वनाप्रदानं भीष्मेण युधिष्ठिराय स्त्रीणां संरक्षणार्थमादेशः ... ... | ७५ |
| ४४–कन्याविवाहे पात्रविषया विभिन्नविचाराः ... | ७६ |
| ४५–कन्योद्वाहस्य कन्यादौहित्रादीनामुत्तराधिकारस्य च विचारः ... ... | ७८ |
| ४६–स्त्रीणां वस्त्राभूषणादिभिः सत्कारस्य परमावश्यकतायाः प्रतिपादनम् ... ... | ७८ |
| ४७–ब्राह्मणप्रभृतिवर्णानां दायभागविधेर्वर्णनम् ... | ७९ |
| ४८–संकरसंततीनामुत्पत्तेः सविस्तरं वर्णनम् ... | ८१ |
| ४९–नानाविधपुत्राणां वर्णनम् ... ... | ८२ |
| ५०–गोमहिमाप्रसंगे च्यवनमुनेरुपाख्यानारम्भः, मत्स्यबन्धे मत्स्यैः सह निबद्धस्य मुनेर्जलान्निःसरणम् ... ... | ८३ |
| ५१–राज्ञा नहुषेण गोमूल्येन च्यवनमुनेः क्रयणम्, मुनिना गोमाहात्म्यकथनम्, मत्स्यानां निषादानां च सद्गतिः ... ... | ८४ |
| ५२–सपत्नीकेन राज्ञा कुशिकेन महर्षेश्च्यवनस्य परिचर्या ... ... | ८५ |
| ५३–च्यवनमुनिकर्तृका राज्ञो राज्ञ्याश्च धैर्यपरीक्षा, तयोः परिचर्यया तुष्टेन मुनिना ताभ्यां वरप्रदानम् ... ... | ८६ |
| ५४–च्यवनप्रभावेण कुशिकेन तद्राज्ञ्या च विविधविस्मापकदृश्यानां दर्शनम्, तुष्टेन मुनिना राज्ञे वरयाचनार्थमादेशः ... ... | ८८ |
| ५५–जिज्ञासुं कुशिकं प्रति च्यवनमुनिना तद्गृहे स्वनिवासकारणकथनं तस्मै वरप्रदानं च ... | ८९ |
| ५६–च्यवनमुनिना भृगुवंशजानां कुशिकवंशजानां च सम्बन्धकारणं विज्ञाप्य तीर्थयात्रार्थं प्रस्थानम् ... | ९१ |
| ५७–अनेकविधतपसां दानानां च फलम् ... | ९१ |
| ५८–जलाशयनिर्माणस्यारामारोपणस्य च फलम् ... | ९३ |
| ५९–उत्तमदानस्योत्तमब्राह्मणानां च प्रशंसां कुर्वता भीष्मेण तेषां सत्कारार्थमुपदेशः ... | ९४ |
| ६०–श्रेष्ठायाचकधार्मिकनिर्धनगुणवद्भ्यो दानस्योत्कृष्टफलम् ... ... | ९५ |
| ६१–राज्ञे यज्ञदानयोर्ब्राह्मणादिप्रजानां रक्षणस्य चोपदेशः ... ... | ९५ |
| ६२–सर्वेषु दानेषूत्कृष्टस्य भूमिदानस्य माहात्म्यं तद्विषये शक्रदेवगुर्वोः संवादश्च ... | ९७ |
| ६३–अन्नदानस्योत्कृष्टमाहात्म्यम् ... | ९९ |
| ६४–विभिन्ननक्षत्रयोगेषु विभिन्नवस्तुदानमाहात्म्यम् | १०० |
| ६५–सुवर्णजलादिविभिन्नवस्तूनां दानस्य महिमा ... | १०१ |
| ६६–उपानच्छकटतिलभूमिगोऽन्नदानानां माहात्म्यम् | १०२ |
| ६७–अन्नजलयोर्दानस्य महिमा ... ... | १०४ |
| ६८–तिलजलदीपरत्नादीनां दानमाहात्म्यप्रसंगे धर्मराजब्राह्मणयोः संवादः ... | १०४ |
| ६९–गोदानस्य महिमा गोब्राह्मणरक्षणात् पुण्यप्राप्तिश्च ... ... | १०५ |
| ७०–ब्राह्मणस्वापहरणजन्यहानिविषये दृष्टान्तरूपेण राज्ञो नृगस्योपाख्यानम् ... ... | १०६ |
| ७१–पितृशापान्नाचिकेतस्य यमान्तिके गमनं यमेन नाचिकेतं प्रति गोदानमाहात्म्यकथनम् ... | १०७ |
| ७२–गोलोकगोदानयोर्विषये इन्द्रयुधिष्ठिरयोः प्रश्नः | ११० |
| ७३–शक्रं प्रति ब्रह्मकर्तृकं गोलोकगोदानयोर्माहात्म्यवर्णनम् ... ... ... | ११० |
| ७४–अपहृतायाः परधेन्वा दाने विक्रये च दोषः, गोहत्याया भीषणपरिणामः, गोदानस्य सुवर्णदक्षिणायाश्च माहात्म्यम् ... ... | ११२ |
| ७५–व्रतनियमदमसत्यब्रह्मचर्याणां मातृपितृगुर्वादीनां सेवायाश्च माहात्म्यम् ... ... | ११२ |
| ७६–गोदानस्य विधिः, गाः प्रति प्रार्थना, गवां निष्क्रयस्य दानस्य च कर्तॄणां नृपाणां नामनिर्देशः ... ... ... | ११३ |
| ७७–कपिलागवामुत्पत्तेर्माहात्म्यस्य च वर्णनम् ... | ११५ |
| ७८–वसिष्ठेन सौदासं प्रति गोदानस्य विधेर्माहात्म्यस्य च वर्णनम् ... ... ... | ११६ |
| ७९–गवां तपसाभीष्टवरप्राप्तिः, तासां दानमाहात्म्यम्, विभिन्नगवां दानेन विभिन्नोत्तमलोकेषु गमनम् | ११७ |
| ८०–गवां गोदानस्य च महिमा ... | ११८ |
| ८१–गवां माहात्म्यम्, शुकं प्रति व्यासकर्तृकं गोगोलोकगोदानमाहात्म्यवर्णनम् ... | ११८ |
| ८२–पद्मया सह गवां संवादः, पद्माप्रार्थनया गोभिः स्वशकृन्मूत्रे निवासार्थं पद्मायै स्वीकृतिप्रदानम् | १२० |
| ८३–ब्रह्मणा शक्रं प्रति गोलोकस्य गवां चोत्कर्षवर्णनं गोभ्यो वरप्रदानं च ... ... | १२१ |
| ८४–भीष्मेण स्वपितुः शान्तनोः करं विहाय कुशोपरि पिण्डदानम्, सुवर्णोत्पत्तेस्तद्दानमाहात्म्यस्य च विषये वसिष्ठपरशुरामयोः संवादः, पार्वत्या देवेभ्यः शापप्रदानम्, तारकासुरभीतानां देवानां ब्रह्मशरणागतिः ... ... | १२२ |
| ८५–ब्रह्मकर्तृकं देवेभ्य आश्वासनम्, अग्नेः परिमार्गणम्, अग्निना स्थापितेन शिवतेजसा संतप्ताया गङ्गाया मेरौ तस्य परित्यागः, कार्तिकेयसुवर्णयोरुत्पत्तिः, वरुणरूपिणो महादेवस्य क्रतौ अग्नेः प्रजापतीनां सुवर्णस्य च प्रादुर्भावः, कार्तिकेयकर्तृकस्तारकासुरवधः ... | १२४ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| ८६–कार्तिकेयस्योत्पत्तिर्भरणं च तस्य देवसैनापत्येऽभिषेकः, तेन तारकवधश्च | ... ... | १२८ |
| ८७–विभिन्नतिथिषु श्राद्धफलम् | ... ... | १२९ |
| ८८–श्राद्धे पितॄणां तृप्तेर्वर्णनम् | ... ... | १३० |
| ८९–विभिन्ननक्षत्रेषु श्राद्धफलम् | ... ... | १३० |
| ९०–श्राद्धे ब्राह्मणपरीक्षा, पंक्तिदूषकाणां पावनानां च विप्राणां वर्णनम्, श्राद्धे लक्षमूर्खविप्रान् विहायैकस्मै वेदविदुषे भोजनदानं श्रेष्ठमिति प्रकथनम् | ... ... | १३१ |
| ९१–शोकातुरस्य निमेः पुत्रार्थे पिण्डदानम्, श्राद्धविषये निमिं प्रत्यत्रेरुपदेशः, विश्वेदेवानां नामानि, श्राद्धे त्याज्यवस्तूनां वर्णनं च | ... | १३२ |
| ९२–श्राद्धान्नेनाजीर्णानां देवानां पितॄणां च ब्रह्मणोऽन्तिके गमनम्, अग्निनाजीर्णस्य निवारणम्, श्राद्धपरितृप्तानां पितृणामाशीर्वचनम् | ... | १३४ |
| ९३–गृहस्थधर्माणां रहस्यम्, प्रतिग्रहदोषं वर्णयितुं वृषादर्भेः सप्तर्षीणां च कथा, भिक्षुरूपिणा शक्रेण कृत्यां निहत्य सप्तर्षीणां रक्षणम्, पद्मपुष्पस्तेयविषये शपथव्याजेन धर्मपालननिर्देशः | ... | १३४ |
| ९४–ब्रह्मसरतीर्थेऽगस्त्यस्य पद्मपुष्पाणामपहृते सति ब्रह्मर्षीणां राजर्षीणां च धर्मोपदेशगर्भितः शपथः, धर्मज्ञानार्थमपहृतानां पद्मपुष्पाणां प्रत्यावर्तनम् | ... ... | १३९ |
| ९५–छत्रोपानहामुत्पत्तौ दाने च युधिष्ठिरस्य प्रश्नः सूर्यरश्मिभी रेणुकायाः शिरः पादौ च संतप्ताविति विज्ञाय जमदग्नेः सूर्योपरि कोपो विप्ररूपिणा सूर्येण सह वार्तालापश्च | ... ... | १४१ |
| ९६–छत्रोपानहामुत्पत्तिर्दानप्रशंसा च | ... | १४२ |
| ९७–गार्हस्थ्ये पञ्चयज्ञकर्मणां विषये पृथिव्या सह भगवतः श्रीकृष्णस्य संवादः | ... ... | १४७ |
| ९८–तपस्विना सुवर्णेन सह मनोः संवादे पुष्पधूपदीपोपहाराणां दानमाहात्म्यम् | ... ... | १४८ |
| ९९–ऋषिषु नहुषस्यात्याचारस्तत्प्रतीकर्तुं भृगुणा सहागस्त्यस्य वार्तालापः | ... ... | १५० |
| १००–नहुषस्य पतनं शतक्रतोरैन्द्रे पुनरभिषेको दीपदानमहिमा च | ... ... ... | १५१ |
| १०१–ब्रह्मस्वापहरणजन्यदोषविषये क्षत्रियश्वपाकयोः संवादो ब्रह्मस्वपरिरक्षणे मृतस्य चाण्डालस्य मोक्षप्राप्तिश्च | ... ... ... | १५२ |
| १०२–विभिन्नकर्मणामनुसारेण विभिन्नलोकानां प्राप्तिरिति वर्णयितुं धृतराष्ट्ररूपिणा शक्रेण सह गौतमस्य संवादः | ... ... ... | १५३ |
| १०३–ब्रह्मणा सह भगीरथस्य संवादः, यज्ञतपदानेभ्योऽनशनस्य महत्त्वाधिक्यम् | ... ... | १५६ |
| १०४–आयुषो वृद्धिक्षयकर्तॄणां शुभाशुभकर्मणां वर्णनप्रसंगेन गृहस्थाश्रमकर्तव्यानां सविस्तरं निरूपणम् | ... ... ... | १५७ |
| १०५–अग्रजानुजयोर्मिथो व्यवहारः, मातृपित्राचार्यादिगुरुजनानां गौरवस्य वर्णनम् | ... ... | १६१ |
| १०६–मासपक्षतिथिसम्बन्धिविभिन्नव्रतोपवासानां फलवर्णनम् | ... ... ... | १६२ |
| १०७–दरिद्रेभ्यो यज्ञतुल्यफलप्रदस्य व्रतोपवासस्य तत्फलस्य च सविस्तरं वर्णनम् | ... ... | १६४ |
| १०८–मानसानां पार्थिवानां च तीर्थानां माहात्म्यम् | | १६८ |
| १०९–प्रतिमासस्य द्वादश्यां तिथावनशनव्रतस्य भगवतो विष्णोः पूजनस्य च विशिष्टमाहात्म्यम् | | १६८ |
| ११०–रूपसौन्दर्यलोकप्रियताप्राप्तये मार्गशीर्षमासे चन्द्रव्रतस्योपयोगितायाः प्रकथनम् | ... ... | १६९ |
| १११–बृहस्पतिना युधिष्ठिरं प्रति प्राणिनां जन्मभेदस्य नानाविधपापजन्यफलस्वरूपनरकप्राप्तेस्तिर्यग्योनौ जन्मग्रहणस्य च वर्णनम् | ... ... | १६९ |
| ११२–पापान्मुक्तेरुपायः, अन्नदानस्योत्कृष्टमाहात्म्यं च | | १७३ |
| ११३–युधिष्ठिरं प्रति अहिंसाया धर्मस्य च माहात्म्यमुपवर्ण्य बृहस्पतेः स्वर्गलोकगमनम् | ... | १७४ |
| ११४–हिंसामांसभक्षणयोर्घोरं गर्हणम् | ... ... | १७४ |
| ११५–मद्यपाने मांसभक्षणे च महान् दोषः, तयोस्त्यागस्य महत्त्वम्, त्यागे परमलाभस्य प्रतिपादनं च | | १७५ |
| ११६–मांसाभक्षणे लाभः, अहिंसाधर्मस्य प्रशंसा च | ... | १७७ |
| ११७–शुभकर्मप्रभावेण कीटस्य पूर्वजन्मस्मृतिः कीटयोनावपि मृत्युभयं सुखानुभूतिं चोपवर्ण्य तस्य स्वश्रेयसे जिज्ञासा | ... ... | १७८ |
| ११८–कीटस्य क्रमशः क्षत्रिययोनौ प्रादुर्भूय व्यासदर्शनप्राप्तिः, व्यासेन ब्राह्मणत्वस्वर्गाक्षयसुखप्राप्तये कीटाय वरप्रदानं च | ... ... | १७९ |
| ११९–ब्राह्मणयोनिमुपलभ्य कीटस्य ब्रह्मलोकगमनम्, तत्र सनातनब्रह्मप्राप्तिश्च | ... ... | १८० |
| १२०–व्यासमैत्रेययोः संवादे दानप्रशंसाकर्मरहस्यं च | | १८० |
| १२१–व्यासमैत्रेययोः संवादे श्रुतिवृत्तसम्पन्नब्राह्मणायान्नदानस्य प्रशंसा | ... ... | १८१ |
| १२२–व्यासमैत्रेययोः संवादे तपःप्रशंसा गृहस्थस्योत्तमकर्तव्यताया निर्देशश्च | ... ... | १८२ |
| १२३–शाण्डिलीसुमनयोः संवादे पतिव्रतानां कर्तव्यनिर्देशः | ... ... ... | १८२ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १२४ | नारदकर्तृको भगवतो नारायणस्याराधनायाः पुण्डरीकायोपदेशः, तस्य भगवद्धामप्राप्तिः, सामगुणस्य प्रशंसा, ब्राह्मणकर्तृकं रक्षोहरिणकृशत्वे कारणप्रतिपादनम् ... ... | १८३ |
| १२५ | श्राद्धविषये देवदूतपित्रोः पापान्मुक्ताविन्द्रविद्युत्प्रभयोः, धर्मविषये इन्द्रबृहस्पत्योः, वृषोत्सर्गादिविषये देवर्षिपितृणां च संवादः ... ... | १८५ |
| १२६ | विष्णुबलदेवदेवगणधर्माग्निविश्वामित्रगोब्रह्माभिर्धर्मस्य गूढरहस्यप्रतिपादनम् ... ... | १८७ |
| १२७ | अग्निलक्ष्म्यङ्गिरोगार्ग्यधौम्यजमदग्निभिर्धर्मरहस्यस्य वर्णनम् ... ... ... | १८९ |
| १२८ | वायुकर्तृकं धर्माधर्मरहस्यवर्णनम् ... | १८९ |
| १२९ | लोमशेन धर्मरहस्यप्रतिपादनम् ... | १९० |
| १३० | अरुन्धतीधर्मराजचित्रगुप्तैर्धर्मसम्बन्धिरहस्यवर्णनम् ... ... ... | १९० |
| १३१ | प्रमथगणैर्धर्माधर्मरहस्यकथनम् ... | १९१ |
| १३२ | दिग्गजानां धर्मसम्बन्धिरहस्यं प्रभावश्च ... | १९२ |
| १३३ | महादेवस्य धर्मसम्बन्धिरहस्यम् ... | १९२ |
| १३४ | स्कन्दस्य धार्मिकं रहस्यम्, भगवता विष्णुना भीष्मेण च तन्माहात्म्यवर्णनम् ... | १९३ |
| १३५ | केषां मनुष्याणामन्नं ग्राह्यं केषामग्राह्यं वेति निरूपणम् ... ... ... | १९३ |
| १३६ | प्रतिग्रहस्यान्याय्यभक्षणस्य च प्रायश्चित्तम् ... | १९४ |
| १३७ | दानेन स्वर्गामिनां राज्ञां वर्णनम् ... | १९५ |
| १३८ | पञ्चविधानां दानानां वर्णनम् ... | १९६ |
| १३९ | तपस्विनः श्रीकृष्णस्यान्तिके ऋषीणामागमनम्, तत्प्रभावसमीक्षापूर्वकं तेन सह वार्तालापश्च ... | १९६ |
| १४० | नारदकर्तृकं हिमवत्पृष्ठे सभूतगणस्य शिवस्य सविस्तरं सौन्दर्यवर्णनम्, पार्वत्या तत्रागत्य पाणिभ्यां शिवस्य चक्षुर्द्वयं समावरणम्, तृतीयनेत्रस्य प्राकट्यम्, हिमवतो भस्मीभूय भूयः स्वस्थतापन्नम्, उमामहेश्वरयोर्धार्मिकसंवादस्योत्थापना च ... ... | १९८ |
| १४१ | शिवपार्वत्योर्धर्मविषयकः संवादः, वर्णाश्रमधर्मसम्बन्ध्याचारस्य प्रवृत्तिनिवृत्तिरूपधर्मस्य च निरूपणम् ... ... | १९९ |
| १४२ | उमामहेश्वरसंवादः, वानप्रस्थधर्मः, तद्विधिर्महिमा च ... ... ... | २०५ |
| १४३ | ब्राह्मणादिवर्णप्राप्तौ जीवस्य शुभाशुभकर्मणां प्राधान्यस्य प्रतिपादनम् ... ... | २०७ |
| १४४ | बन्धनमुक्तिस्वर्गनरकदीर्घाल्पायुप्रदानां मनोवाक्कायकृतानां शुभाशुभकर्मणां वर्णनम् ... | २०९ |
| १४५ | स्वर्गनरकप्रदानामुत्तमाधमकुले जन्महेतुभूतानां च कर्मणां वर्णनम् ... | २११ |
| | ( १ ) राजधर्मस्य वर्णनम् ... | २१२ |
| | ( २ ) संग्रामगतानां वीराणां धर्मस्य वर्णनं रणयज्ञे प्राणोत्सर्गस्य महिमा च ... | २१३ |
| | ( ३ ) राजधर्मस्य संक्षिप्तवर्णनम् ... | २१४ |
| | ( ४ ) दमाहिंसयोः प्रशंसा दैवस्य प्राधान्यं च | २१५ |
| | ( ५ ) त्रिवर्गस्य निरूपणं श्रेयस्कराणां वृत्तानां वर्णनं च ... ... ... | २१५ |
| | ( ६ ) विभिन्नकर्मफलानां वर्णनम् ... | २१७ |
| | ( ७ ) काणत्वपंगुत्वादिविभिन्नदोषाणां रोगाणां च हेतुभूतदुष्कर्मणां वर्णनम् ... | २१९ |
| | ( ८ ) उमामहेश्वरसंवादे विभिन्नमहत्त्वपूर्णविषयाणां विवेचनम् ... | २२२ |
| | ( ९ ) प्राणिनां चतुर्भेदनिरूपणं पूर्वजन्मस्मृतिरहस्यम्, मृतस्य प्रत्यावर्तने स्वप्नदर्शनहेतुत्वम्, दैवपुरुषार्थपुनर्जन्मनां विवेचनम् ... ... | २२४ |
| | ( १० ) यमलोकस्य तन्मार्गाणां च वर्णनम्, दुष्कर्मिणां नरकयातनानां कर्मानुसारेण विभिन्नयोनिषु तज्जन्मनां चोल्लेखः | २२६ |
| | ( ११ ) शुभाशुभमानसादित्रिविधकर्मणां स्वरूपफलयोर्मद्यसेवनदोषस्य च वर्णनम्, आहारशुद्धेर्मांसभक्षणदोषस्य मांसाभक्षणे लाभस्य जीवदयामहत्त्वस्य गुरुपूजाविधेरुपवासविधेर्ब्रह्मचर्यपालनस्य तीर्थचर्यायाः सर्वसाधारणद्रव्यदानपुण्यस्यान्नसुवर्णगोभूमिकन्याविद्यादानमाहात्म्यस्य पुण्यतमदेशकालयोर्दत्तदानस्य धर्मस्य च निष्फलताया विविधदानस्य लौकिकवैदिकयज्ञस्य देवपूजायाश्च निरूपणम् ... | २२८ |
| | ( १२ ) श्राद्धप्रकारवर्णनम्, दानस्य त्रैविध्येन फलत्रैविध्यस्योल्लेखः, दानजन्यपञ्चफलानि, विविधधर्मणां तत्फलानां च प्रतिपादनम् ... ... | २३५ |
| | ( १३ ) प्राणिनां शुभाशुभगतिनिर्णायकलक्षणानां वर्णनम्, मृत्योर्द्वैविध्यस्य यज्ञसाध्यश्चतुर्भेदस्य च कथनम्, कर्तव्यपालनपूर्वकशरीरत्यागे महाफलम्, कामक्रोधादिपूर्वकदेहत्यागे नरकप्राप्तिश्च ... ... | २३७ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | (१४) मोक्षधर्मस्य विशेषतायाः प्रतिपादनम्, मोक्षदायकज्ञानस्य प्राप्त्युपायः, मोक्षप्राप्तौ वैराग्यस्य प्राबल्यं च ... | २३८ |
| | (१५) सांख्यज्ञानप्रतिपादनपूर्वकमव्यक्तादिचतुर्विंशतितत्त्वोत्पत्त्यादेर्वर्णनम् ... | २४१ |
| | (१६) योगधर्मस्य प्रतिपादनं तत्फलवर्णनं च | २४२ |
| | (१७) पाशुपतयोगवर्णनं शिवलिङ्गपूजामाहात्म्यं च ... ... | २४४ |
| १४६ | पार्वतीकर्तृकं स्त्रीधर्मवर्णनम् ... | २४५ |
| १४७ | वंशपरम्परायाः वर्णनं भगवतः श्रीकृष्णस्य माहात्म्यस्य च प्रतिपादनम् ... | २४६ |
| १४८ | भगवतः श्रीकृष्णस्य महिम्नो वर्णनं भीष्मेण युधिष्ठिराय राज्यं कर्तुमादेशप्रदानं च ... | २४८ |
| १४९ | श्रीविष्णुसहस्रनामस्तोत्रम् ... ... | २५० |
| १५० | जपनीयमन्त्रस्य निरूपणं सायंप्रातःकीर्तनीयदेवर्षिनृपाणां शुभनाम्नां कीर्तनस्य माहात्म्यं गायत्रीजपस्य फलं च ... ... | २५३ |
| १५१ | ब्राह्मणानां महिम्नो वर्णनम् ... | २५६ |
| १५२ | कार्तवीर्यार्जुनस्य दत्तात्रेयतो वरचतुष्टयलाभस्तस्मिन्नभिमानस्योत्पत्तिश्च ब्राह्मणमहिमविषयकः कार्तवीर्यवायुदेवयोः संवादश्च ... | २५६ |
| १५३ | वायुना सोदाहरणं ब्राह्मणमहिम्नो वर्णनम् ... | २५७ |
| १५४ | ब्राह्मणसत्तमस्योतथ्यस्य प्रभावः ... | २५८ |
| १५५ | अगस्त्यवसिष्ठयोः प्रभावस्य वर्णनम् ... | २५९ |
| १५६ | अत्रेश्च्यवनस्य च प्रभावः ... | २५९ |
| १५७ | बलात् स्वर्गमुपभुञ्जानानां कपानां ब्राह्मणैर्भस्मीकरणं कार्तवीर्यवायुदेवयोः संवादस्योपसंहारश्च | २६० |
| १५८ | भीष्मेण श्रीकृष्णमहिम्नो वर्णनम् ... | २६१ |
| १५९ | श्रीकृष्णेन प्रद्युम्नं प्रति ब्राह्मणमहत्त्वं प्रतिपादयता दुर्वाससश्चरित्रस्य वर्णनं सर्वस्यैतस्य प्रसङ्गस्य युधिष्ठिराय श्रावणं च ... | २६३ |
| १६० | श्रीकृष्णेन भगवतः शङ्करस्य महत्ताया वर्णनम् | २६५ |
| १६१ | शङ्करमाहात्म्यवर्णनम् ... | २६६ |
| १६२ | धर्मे आगमप्रमाणस्य श्रेष्ठत्वं धर्माधर्मयोः फलं साध्वसाध्वोर्लक्षणं शिष्टाचारस्य निरूपणं च | २६७ |
| १६३ | युधिष्ठिरेण विद्यां बलं बुद्धिं चापेक्ष्य भाग्यस्यैव प्राधान्यस्य प्रतिपादनं भीष्मेण तस्य समाधानं च | २६९ |
| १६४ | सुखदुःखोपलब्धौ शुभाशुभकर्मणामेव हेतुत्वं प्रतिपादयता भीष्मेण धर्मानुष्ठानस्य समर्थनम् | २६९ |
| १६५ | नित्यस्मरणीयानां देवनदीपर्वतर्षिनृपाणां नाम्नां कीर्तनस्य माहात्म्यम् ... ... | २७० |
| १६६ | भीष्मस्यानुमत्या सपरिवारस्य युधिष्ठिरस्य हस्तिनापुरं प्रति प्रस्थानम् ... | २७१ |


## ( भीष्मस्वर्गारोहणपर्वणि )


| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १६७ | भीष्मस्यान्त्येष्टिसंस्कारसामग्रीमादाय युधिष्ठिरप्रभृतीनां तत्पार्श्वे गमनं भीष्मेण श्रीकृष्णादिभ्यो देहं त्यक्तुमनुमतिं गृह्णता धृतराष्ट्राय युधिष्ठिराय च कर्तव्यस्योपदेशः ... ... | २७२ |
| १६८ | भीष्मेण स्वकीयदेहस्य परित्यागो धृतराष्ट्रप्रभृतिभिस्तस्य दाहः, कुरुभिस्तस्मै गङ्गायां जलाञ्जलिदानं गङ्गायाः स्वपुत्रस्य कृते शोकः श्रीकृष्णकर्तृकं तस्यै सान्त्वनाप्रदानम् ... | २७३ |


# आश्वमेधिकपर्वणि

## ( अश्वमेधपर्वणि )


| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | शोकमग्नस्य युधिष्ठिरस्य धरायां पतनं धृतराष्ट्रेण तस्य प्रबोधनं च ... | २७५ |
| २ | श्रीकृष्णेन व्यासेन च युधिष्ठिराय सान्त्वनाप्रदानम् ... ... ... | २७५ |
| ३ | व्यासेन युधिष्ठिरं प्रति यज्ञाय धनप्राप्त्युपायं कथयता संवर्तमरुत्तप्रसंगस्योपस्थानम् ... | २७६ |
| ४ | मरुत्तपूर्वजानां परिचयं ददता व्यासेन मरुत्तस्य गुणप्रभावयोर्यज्ञस्य च दिग्दर्शनम् ... | २७७ |
| ५ | इन्द्रप्रेरणया बृहस्पतिना मनुष्ययज्ञं न कारयिष्यामीति प्रतिज्ञाकरणम् ... | २७८ |
| ६ | नारदोक्तदिशा मरुत्तेन संवर्तस्य दर्शनम् ... | २७८ |
| ७ | संवर्तमरुत्तयोर्वार्तालापो मरुत्तस्याग्रहेण संवर्तेन तद्यज्ञं कारयितुं स्वीकृतिप्रदानम् ... | २७९ |
| ८ | संवर्तेन मरुत्ताय सुवर्णोपलब्धये महादेवस्य नाममयं स्तवनं कर्तुमुपदेशः, ततो मरुत्तस्य धनप्राप्तिः, तदीयसम्पत्तिमवेक्ष्य बृहस्पतेश्चिन्ता | २८० |
| ९ | बृहस्पतिना देवेन्द्रं प्रति स्वकीयचिन्तायाः प्रकटनमिन्द्राज्ञयाग्निदेवस्य मरुत्तपार्श्वे तत्संदेशमादाय गमनं संवर्तभयात्पुनरावृत्तेन तेनेन्द्रं प्रति ब्रह्मबलोत्कर्षस्य प्रतिपादनं च ... | २८२ |
| १० | इन्द्रेण गन्धर्वराजं प्रेष्य तद्द्वारा मरुत्ताय भयदर्शनं संवर्तेन मन्त्रबलाद् देवानाहूय च मरुत्तयज्ञस्य पूरणम् ... ... | २८४ |
| ११ | श्रीकृष्णेन युधिष्ठिरं प्रति देवेन्द्रकर्तृकदेहस्थवृत्रासुरविनाशेतिवृत्तं श्रावयित्वा प्रबोधनम् ... | २८६ |
| १२ | श्रीकृष्णस्य युधिष्ठिराय मनोजेतुमादेशः ... | २८६ |
| १३ | ममतात्यागमहत्त्वं कामगीतोल्लेखः, युधिष्ठिरं प्रति यज्ञं कर्तुं प्रेरणा च ... ... | २८७ |
| १४ | ऋषीणामन्तर्धानं भीष्मप्रभृतीनां श्राद्धं विधाय युधिष्ठिरादीनां हस्तिनापुरे गमनं युधिष्ठिरधर्मराज्यस्य वर्णनं च ... ... | २८८ |
| १५ | श्रीकृष्णस्यार्जुनं प्रति स्वकीयद्वारकागमनप्रस्तावः | २८९ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|

( अनुगीतापर्वणि )


१६–अर्जुनस्य श्रीकृष्णं प्रति गीतोक्तविषयजिज्ञासा, श्रीकृष्णेनार्जुनं प्रति सिद्धमहर्षिकाश्यपयोः संवादस्योत्थापनम् ... ... २९०
१७–काश्यपकृतप्रश्नानामुत्तररूपतया सिद्धेन महात्मना जीवानां विविधगतीनां निरूपणम् ... २९२
१८–जीवस्य गर्भे प्रवेश आचारधर्मः कर्मफलानामनिवार्यता संसारतरणोपायश्च ... २९३
१९–गुरुशिष्यसंवादे मोक्षप्राप्त्युपायस्य वर्णनम् ... २९४
२०–ब्राह्मणगीता—ब्राह्मणस्यैकस्य पत्नीं प्रति ज्ञानयज्ञस्योपदेशः ... ... २९५
२१–दशहोतृकयज्ञस्य वर्णनं वाङ्मनसयोः श्रेष्ठतायाश्च प्रतिपादनम् ... ... २९६
२२–मनोबुद्धीन्द्रियात्मकसप्तहोतॄणां यज्ञस्य मनइन्द्रियसंवादस्य च वर्णनम् ... २९७
२३–प्राणापानप्रभृतीनां संवादो ब्रह्मणा सर्वेषां श्रेष्ठयस्य प्रतिपादनम् ... ... २९८
२४–नारददेवमतसंवाद उदानस्योत्कृष्टताया वर्णनम् २९९
२५–चातुर्होत्रयज्ञस्य वर्णनम् ... ... ३००
२६–अन्तर्यामिणः प्राधान्यम् ... ... ३००
२७–आध्यात्मिकस्य महावनस्य वर्णनम् ... ३०१
२८–ज्ञानिनः स्थितिरध्वर्युयत्योः संवादश्च ... ३०२
२९–परशुरामेण क्षत्रियकुलस्य संहारः ... ३०३
३०–अलर्कस्य ध्यानयोगमुदाहृत्य पितामहैः परशुरामस्य प्रबोधनं परशुरामेण तपसा सिद्धेरुपलब्धिश्च ... ... ३०३
३१–अम्बरीषगीताऽऽध्यात्मिकस्वराज्यविषयिकी गाथा ... ... ... ३०५
३२–धर्मजनकयोर्ममत्वत्यागविषयकः संवादः ... ३०५
३३–ब्राह्मणस्य पत्नीं प्रति स्वस्य ज्ञाननिष्ठतायाः परिचयदानम् ... ... ३०६
३४–श्रीकृष्णेन ब्राह्मणस्य ब्राह्मण्याः क्षेत्रज्ञस्य च रहस्यं प्रकाशयता ब्राह्मणगीताया उपसंहारः ... ३०६
३५–श्रीकृष्णेनार्जुनं प्रति मोक्षधर्मस्य वर्णनं गुरुशिष्यसंवादे ब्रह्मणो महर्षीणां च प्रश्नोत्तराणि ३०७
३६–ब्रह्मणा तमोगुणस्य तत्कार्याणां फलानां च वर्णनम् ... ... ... ३०८
३७–रजोगुणस्य कार्याणां वर्णनं तज्ज्ञानस्य फलं च ३०९
३८–सत्त्वगुणकार्याणां वर्णनं तज्ज्ञानस्य फलं च ... ३१०
३९–सत्त्वादिगुणानां प्रकृतिनाम्नां च वर्णनम् ... ३१०
४०–महत्तत्त्वस्य नामानि, परमात्मतत्त्वज्ञानस्य महिमा च ... ... ३११
४१–अहंकारस्योत्पत्तेस्तत्स्वरूपस्य च वर्णनम् ... ३१२
४२–अहंकारान्महाभूतानामिन्द्रियाणां च सृष्टिरध्यात्माधिभूताधिदैवतानां वर्णनं निवृत्तिमार्गस्योपदेशश्च ... ... ... ३१२
४३–चराचरभूताधिपतीनां धर्मप्रभृतिलक्षणानां विषयानुभवसाधनानां च वर्णनं क्षेत्रज्ञस्य वैलक्षण्यं च ... ... ३१४
४४–पदार्थानामाद्यन्तयोर्ज्ञानस्य नित्यतायाश्च वर्णनम् ३१५
४५–देहरूपस्य कालचक्रस्य गृहस्थब्राह्मणयोर्धर्मस्य च वर्णनम् ... ... ... ३१५
४६–ब्रह्मचारिवानप्रस्थसंन्यासिनां धर्मस्य वर्णनम् ... ३१६
४७–मोक्षसाधनानां निरूपणं देहरूपस्य वृक्षस्य ज्ञानासिना तदुच्छेदस्य च वर्णनम् ... ३१८
४८–जीवात्मपरमात्मनोः स्वरूपस्य विवेचनम् ... ३१८
४९–धर्मनिर्णयं ज्ञातुमृषीणां प्रश्नः ... ३१९
५०–सत्त्वपुरुषयोरन्यत्वस्य धीमतः प्रशंसायाः पञ्चभूतगुणविस्तारस्य परमात्मनः श्रेष्ठत्वस्य वर्णनम् ३१९
५१–तपसः प्रभावः, आत्मनः स्वरूपं तज्ज्ञानस्य च महिमानुगीताया उपसंहारश्च ... ३२१
५२–श्रीकृष्णस्यार्जुनेन सह हस्तिनापुरे गमनं तत्र सर्वैः सह मिलित्वा युधिष्ठिरेणानुज्ञातस्य तस्य सुभद्रया सह द्वारकां प्रति प्रस्थानम् ... ३२२
५३–मार्गे श्रीकृष्णस्य मुखात् कौरवविनाशवृत्तान्तं विज्ञाय उत्तङ्कस्य कोपः श्रीकृष्णेन तस्य प्रशमनं च ... ... ... ३२४
५४–श्रीकृष्णेनोत्तङ्कं प्रत्यध्यात्मतत्त्वस्य वर्णनं दुर्योधनापराधस्यैव कौरवविनाशहेतुत्वमिति प्रतिपादनं च ... ... ... ३२५
५५–श्रीकृष्णेनोत्तङ्काय विश्वरूपदर्शनं मरौ जलप्राप्तये वरप्रदानं च ... ... ३२६
५६–उत्तङ्कस्य गुरुभक्तेर्वर्णनं गुरुपुत्र्या सह उत्तङ्कस्य विवाहो गुरुपत्न्या आदेशेन दिव्ये कुण्डले आनेतुमुत्तङ्कस्य सौदाससमीपे गमनम् ... ... ३२७
५७–उत्तङ्कस्य सौदाससकाशात् तत्पत्न्याः कुण्डलयोः प्रार्थना, सौदासस्य प्रेरणया तस्य मदयन्तीसंनिधौ गमनं च ... ... ... ३२८
५८–कुण्डले आदायोत्तङ्कस्य निवर्तनं मार्गे कुण्डलयोरपहारः सुरेन्द्राग्निदेवयोः कृपया पुनस्ते उपलभ्योत्तङ्केन तयोर्गुरुपत्न्यै प्रदानम् ... ३२९
५९–श्रीकृष्णस्य द्वारकां गत्वा रैवतके महोत्सवे सम्मिलितस्य सर्वैः सह समागमः ... ... ३३१
६०–वसुदेवपृष्टेन श्रीकृष्णेन तस्मै महाभारतयुद्धवृत्तान्तस्य संक्षेपतः कथनम् ... ... ३३१

| अध्याये | विषयाः | पृष्ठाङ्काः |
| --- | --- | --- |
| ६१ | सुभद्रया प्रेरितेन श्रीकृष्णेन वसुदेवं प्रत्यभिमन्युवधवृत्तान्तस्य कथनम् ... ... | ३३२ |
| ६२ | वसुदेवादिभिरभिमन्युमुद्दिश्य श्राद्धकरणं व्यासेनोत्तरामर्जुनं च प्रबोध्य युधिष्ठिरं प्रत्यश्वमेधं कर्तुमनुज्ञादानम् ... .. ... | ३३४ |
| ६३ | युधिष्ठिरेण भ्रातृभिः सह सम्मन्त्र्य धनमानेतुं प्रस्थानम् ... ... ... | ३३४ |
| ६४ | पाण्डवैर्हिमालयं गत्वा सैन्यस्य निवेशनं रात्रौ सोपवासं निवासकरणं च ... ... | ३३५ |
| ६५ | ब्राह्मणानामाज्ञया शिवस्य तत्पार्षदादीनां च पूजां कृत्वा युधिष्ठिरेण धनराशिमुद्धार्य तस्य स्वेन सहानयनम् ... ... ... | ३३६ |
| ६६ | श्रीकृष्णस्य हस्तिनापुर आगमनमुत्तराया मृतं बालकं जीवयितुं कुन्तीकर्तृकं तं प्रति प्रार्थनम् | ३३७ |
| ६७ | परीक्षितं जीवयितुं श्रीकृष्णं प्रति सुभद्रायाः प्रार्थना ... ... ... | ३३७ |
| ६८ | श्रीकृष्णस्य प्रसूतिकागृहे प्रवेश उत्तराया विलापः स्वपुत्रजीवनार्थं तस्याः श्रीकृष्णं प्रति प्रार्थना च | ३३८ |
| ६९ | उत्तराया विलापः श्रीकृष्णेन तस्या मृतबालकस्योज्जीवनं च ... ... ... | ३३९ |
| ७० | श्रीकृष्णेन परीक्षितो नामकरणं पाण्डवानां हस्तिनापुरसमीप आगमनं च ... ... | ३३९ |
| ७१ | श्रीकृष्णेन तत्सङ्गिभिश्च पाण्डवानां स्वागतकरणं नगरमागत्य पाण्डवानां सर्वैः सह समागमो व्यासेन श्रीकृष्णेन च युधिष्ठिराय यज्ञं कर्तुमाज्ञाप्रदानम्, ... ... ... | ३४० |
| ७२ | व्यासस्याज्ञयाश्वस्य रक्षार्थमर्जुनस्य राज्यनगरयो रक्षार्थं भीमसेननकुलयोः कुटुम्बपालनार्थं सहदेवस्य च नियुक्तिः ... ... ... | ३४१ |
| ७३ | ससैन्येनार्जुनेनाश्वस्यानुसरणम् ... ... | ३४२ |
| ७४ | अर्जुनकर्तृकस्त्रिगर्तानां पराजयश्च ... | ३४३ |
| ७५ | अर्जुनस्य प्राग्ज्यौतिषपुराधीशेन वज्रदत्तेन सह युद्धम् ... ... ... | ३४४ |
| ७६ | अर्जुनेन वज्रदत्तस्य पराजयः ... ... | ३४४ |
| ७७ | अर्जुनस्य सैन्धवैः सह युद्धम् ... ... | ३४५ |
| ७८ | अर्जुनस्य सैन्धवैः सह संग्रामो दुःशलाया अनुरोधेन तस्य समाप्तिश्च ... ... | ३४६ |
| ७९ | अर्जुनबभ्रुवाहनयोर्युद्धेऽर्जुनस्य मृत्युः ... | ३४७ |
| ८० | चित्राङ्गदाया विलापो लब्धसंज्ञस्य बभ्रुवाहनस्य शोकोद्गार उलूप्याः प्रयत्नेन संजीवनमणेः स्पर्शेनार्जुनस्य पुनर्जीवनलाभश्च ... ... | ३४८ |
| ८१ | अर्जुनपृष्टयोलूप्या स्वागमनकारणस्यार्जुनपराजयरहस्यस्य च कथनं पुत्रेण पत्न्या चानुज्ञातस्य पार्थस्य पुनरश्वमनुगमनम् ... ... | ३५० |
| ८२ | मगधाधिपस्य मेघसन्धेः पराजयः ... ... | ३५१ |
| ८३ | दक्षिणपश्चिमसिन्धुतटवर्तिषु देशेषु विचरतोऽश्वस्य द्वारकायां पञ्चनदे गान्धारे च प्रवेशः ... | ३५२ |
| ८४ | शकुनिपुत्रस्य पराजयः ... ... | ३५२ |
| ८५ | यज्ञभूमिनिर्माणोपक्रमो नानादेशेभ्यः समागतैर्नरेशैर्यज्ञस्य सज्जाया आयोजनस्य च दर्शनम् | ३५३ |
| ८६ | युधिष्ठिरस्य भीमसेनं प्रति राज्ञां समर्हणं कर्तुमादेशः श्रीकृष्णेन युधिष्ठिरं प्रति धनंजयसंदेशस्य कथनं च ... ... ... | ३५४ |
| ८७ | श्रीकृष्णयुधिष्ठिरयोरर्जुनविषयको वार्तालापोऽर्जुनस्य हस्तिनापुरे गमनमुलूपीचित्राङ्गदाभ्यां सह बभ्रुवाहनस्यागमनं च ... ... | ३५५ |
| ८८ | उलूपीचित्राङ्गदासहितस्य बभ्रुवाहनस्य रत्नाभूषणादिना सत्कारोऽश्वमेधयज्ञस्यारम्भश्च ... | ३५५ |
| ८९ | युधिष्ठिरेण ब्राह्मणेभ्यो दक्षिणाया दानं राजभ्योऽपि धनं दत्त्वा तेषां प्रस्थापनम् ... | ३५७ |
| ९० | युधिष्ठिरस्य यज्ञे समागतेन नकुलेनोञ्छवृत्तिब्राह्मणकर्तृकसक्तुप्रस्थदानस्य महिमाश्वमेधतोऽपि महीयानिति कथनम् ... ... | ३५८ |
| ९१ | हिंसायुतस्य यज्ञस्य धर्मस्य च गर्हणम् ... | ३६१ |
| ९२ | महर्षिणागस्त्येनानुष्ठितस्य यज्ञस्य कथा ... | ३६२ |
| | **( वैष्णवधर्मपर्वणि )** | |
| ( १ ) | युधिष्ठिरस्य धर्मविषयकः प्रश्नो भगवता श्रीकृष्णेन धर्मस्य स्वमहिम्नश्च वर्णनम् ... | ३६३ |
| ( २ ) | चातुर्वर्ण्यस्य कर्मणां तेषां फलानां च वर्णनं धर्मस्य वृद्धेः पापानां क्षयस्य चोपायाः ... ... | ३६५ |
| ( ३ ) | वृथाजन्मदानजीवनानां वर्णनं सात्त्विकदानानां लक्षणं दानार्हपात्रं ब्राह्मणस्य महत्त्वं च ... ... | ३६६ |
| ( ४ ) | बीजयोन्योः शुद्धिर्गायत्रीजपस्य ब्राह्मणानां च महत्त्वं ब्राह्मणतिरस्कारजनितघोरफलस्य वर्णनं च ... | ३६८ |
| ( ५ ) | यमलोकपथे प्राप्यं दुःखं ततो मोक्षस्योपायाश्च ... ... | ३७० |
| ( ६ ) | जलान्नदानस्यातिथिसत्कारस्य च माहात्म्यम् ... ... | ३७२ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| ( ७ ) | भूदानतिलदानयोरुत्तमब्राह्मणस्य च महिमा ··· ··· | ३७३ |
| ( ८ ) | विविधानां दानानां महत्त्वम् ··· | ३७५ |
| ( ९ ) | पञ्चमहायज्ञाः सविधिस्नानं तदङ्गभूतानि कर्माणि, भगवत्प्रियाणि पुष्पाणि भगवद्भक्तानां लक्षणं च ··· | ३७६ |
| ( १० ) | कपिलाया गोस्तस्या दानस्य च माहात्म्यं कपिलाया दश भेदाश्च | ३७९ |
| ( ११ ) | कपिलायाङ्गविदेवानां निवासस्य, कपिलाया माहात्म्यस्य, अयोग्यब्राह्मणस्य नरकप्रदानां पापानां स्वर्गप्रापकाणां पुण्यानां च वर्णनम् ··· | ३८० |
| ( १२ ) | ब्रह्महत्यासदृशानां पापानामन्नदानप्रशंसायाख्याख्यानानां पापिनां दानफलानां धर्मप्रशंसायाश्च वर्णनम् ··· | ३८२ |
| ( १३ ) | धर्मशौचयोर्लक्षणं भिक्ष्वभ्यागतयोः सत्कारस्योपदेशः, शिष्टाचारो दानपात्रब्राह्मणा अन्नदानप्रशंसा च ··· | ३८३ |
| ( १४ ) | भोजनविधिः, गवार्थे ग्रासमुष्टिप्रदानस्य विधिः, तिलानां माहात्म्यम्, ब्राह्मणकर्तृकतिलेक्षुप्रपीडननिषेधः ··· | ३८४ |
| ( १५ ) | आपद्धर्माः, श्रेष्ठाश्रेष्ठाश्च ब्राह्मणाः, श्राद्धस्योत्तमकालः, मानवधर्मसारस्य वर्णनम् ··· ··· | ३८४ |
| ( १६ ) | अग्निस्वरूपेऽग्निहोत्रस्य विधिस्तन्माहात्म्यस्य च वर्णनम् ··· | ३८६ |
| ( १७ ) | चान्द्रायणव्रतविधिः, प्रायश्चित्तरूपेण तत्करणस्य विधेर्महिम्नश्च वर्णनम् ··· | ३८७ |
| ( १८ ) | सर्वहितकृद्धर्मवर्णनं द्वादशीव्रतस्य माहात्म्यं युधिष्ठिरेण भगवतः स्तवनं च | ३८९ |
| ( १९ ) | विषुवयोगे ग्रहणादौ च दानस्य महिमा अश्वत्थस्य माहात्म्यं तीर्थीभूतानां गुणानां प्रशंसनमुत्तमं प्रायश्चित्तं च ··· ··· | ३९० |
| ( २० ) | उत्तमाधमब्राह्मणानां लक्षणं भगवद्भक्तानां गवां पिप्पलस्य च माहात्म्यम् ··· ··· | ३९२ |
| ( २१ ) | भगवत उपदेशस्योपसंहारस्तस्य द्वारकागमनं च ··· ··· | ३९२ |


## आश्रमवासिकपर्वणि

### ( आश्रमवासपर्वणि )


| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | भ्रातृभिः सहितेन युधिष्ठिरेण कुन्तीप्रभृतिभिर्देवीभिश्च गान्धारीधृतराष्ट्रयोः सेवनम् ··· | ३९५ |
| २ | पाण्डवानां गान्धारीधृतराष्ट्रयोरनुकूलं वर्तनम् | ३९६ |
| ३ | गान्धार्या सह वनं गन्तुं धृतराष्ट्रस्योद्योगः, तदनुज्ञानार्थे युधिष्ठिरं प्रत्यनुरोधश्च ततो युधिष्ठिरकुन्तीप्रभृतीनां संतापश्च ··· | ३९६ |
| ४ | व्यासप्रबोधितेन युधिष्ठिरेण धृतराष्ट्राय वनं गन्तुमनुज्ञाप्रदानम् ··· ··· | ३९९ |
| ५ | धृतराष्ट्रेण युधिष्ठिरं प्रति राजनीतेरुपदेशः | ३९९ |
| ६ | धृतराष्ट्रकर्तृको राजनीतेरुपदेशः ··· | ४०१ |
| ७ | युधिष्ठिराय धृतराष्ट्रेण राजनीतेरुपदेशः ··· | ४०१ |
| ८ | धृतराष्ट्रेण कुरुजाङ्गलदेशवासिप्रजां प्रति वने गमनार्थमनुज्ञाप्रार्थनम् ··· ··· | ४०२ |
| ९ | प्रजाजनेभ्यो धृतराष्ट्रेण स्वक्षमायाः प्रार्थनम् | ४०३ |
| १० | प्रजाप्रतिनिधिभूतेन साम्बनाम्ना ब्राह्मणेन धृतराष्ट्राय ससान्त्वनमुत्तरदानम् ··· | ४०३ |
| ११ | धृतराष्ट्रेण विदुरद्वारा युधिष्ठिरतः श्राद्धाय धनस्य याचनं तत्रार्जुनस्य सम्मतिर्भीमसेनस्य विरोधश्च ··· ··· | ४०५ |
| १२ | अर्जुनेन भीमस्य प्रबोधनं युधिष्ठिरेण धृतराष्ट्राय यथेष्टं धनं दातुमङ्गीकरणम् ··· | ४०५ |
| १३ | विदुरेण धृतराष्ट्रं प्रति युधिष्ठिरस्यौदार्यपूर्णोत्तरवचनस्य निवेदनम् ··· ··· | ४०६ |
| १४ | धृतराष्ट्रेण युद्धे निहतानां जनानां कृते श्राद्धस्य महतो दानयज्ञस्य चानुष्ठानम् ··· | ४०६ |
| १५ | गान्धार्या सहितस्य धृतराष्ट्रस्य वनाय प्रस्थानम् | ४०७ |
| १६ | धृतराष्ट्रेण पौराणां निवर्तनं पाण्डवानामनुरोधेनापि कुन्त्या वनगमनादनिवृत्तिः ··· | ४०८ |
| १७ | कुन्त्याः पाण्डवान् प्रति तेषामनुनयस्योत्तरम् | ४०९ |
| १८ | स्त्रीभिः सहितानां पाण्डवानां नैराश्येन निवर्तनम्, कुन्तीसहिताया गान्धार्या धृतराष्ट्रप्रभृतीनां च मार्गे गङ्गातटे निवासः ··· | ४०९ |
| १९ | धृतराष्ट्रादीनां गङ्गातटमुषित्वा ततः कुरुक्षेत्राय प्रस्थानं शतयूपस्याश्रमे निवसनं च ··· | ४१० |
| २० | प्राक्तनराजर्षीणां तपःसिद्धिनिदर्शनेन देवर्षिणा धृतराष्ट्रस्य तपोविषयकश्रद्धायाः परिवर्धनं शतयूपेन पृष्टे सति धृतराष्ट्रस्य भविष्यगतेर्वर्णनं च | ४११ |
| २१ | धृतराष्ट्रादीनां कृते पाण्डवानां पौराणां च चिन्ता ··· ··· | ४१२ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
| --- | --- | --- |
| २२– | मातुः कृते पाण्डवानां चिन्ता, युधिष्ठिरस्यारण्यजिगमिषा, द्रौपदीसहदेवयोस्तस्यानुगमने उत्साहः, सेनान्तःपुरसहितस्य युधिष्ठिरस्य वनाय प्रस्थानम् ... ... | ४१२ |
| २३– | ससैन्यानां पाण्डवानां यात्रा, कुरुक्षेत्रे तेषामागमनं च ... ... | ४१३ |
| २४– | पाण्डवैः पौरैश्च कुन्त्या गान्धार्या धृतराष्ट्रस्य च दर्शनम् ... ... | ४१४ |
| २५– | संजयकर्तृकमृषिभ्यः पाण्डवानां तत्पत्नीनामन्यस्त्रीणां च परिचयप्रदानम् ... | ४१४ |
| २६– | धृतराष्ट्रयुधिष्ठिरयोर्वार्तालापः, युधिष्ठिरगात्रे विदुरस्य प्रवेशश्च ... ... | ४१५ |
| २७– | युधिष्ठिरादीनां तापसाश्रमे गमनम्, तत्र कलशादीनां वितरणम्, पुनः धृतराष्ट्रसमीपे आगमनम्, तेषामन्तिके ऋषिगणसहितस्य महर्षेर्व्यासस्यागमनम् ... | ४१६ |
| २८– | धृतराष्ट्रं प्रति कुशलं पृच्छता महर्षिणा व्यासेन विदुरयुधिष्ठिरयोर्धर्मरूपतायाः प्रतिपादनम्, तस्मै अभीष्टवस्तुयाचनार्थं प्रेरणाप्रदानं च | ४१७ |
| | **( पुत्रदर्शनपर्वणि )** | |
| २९– | मृतबान्धवानां कृते धृतराष्ट्रस्य घोरविषादः कुन्तीगान्धार्योः स्वमृतपुत्राणां दर्शनार्थं व्यासं प्रत्यनुरोधः ... ... | ४१८ |
| ३०– | कुन्तीकर्तृकं कर्णजन्मनो गुप्तरहस्यस्य प्रकटनम्, तस्यै व्यासस्याश्वासनम् ... | ४१९ |
| ३१– | व्यासकर्तृकं धृतराष्ट्रादीनां पूर्वजन्मनः परिचयप्रदानम्, व्यासवाक्येन सर्वेषां गङ्गातटे गमनम् ... ... | ४२० |
| ३२– | व्यासप्रभावेण कुरुक्षेत्रयुद्धे मृतानां कौरवपाण्डववीराणां गङ्गाजलान्निःसरणम् ... | ४२१ |
| ३३– | परलोकादागतानां व्यक्तीनामरागद्वेषपूर्वकं मिथः सम्मेलनं व्यतीतायां शर्वर्यामन्तर्धानं च व्यासाज्ञया गङ्गाम्भस्याप्लुत्य विधवानां स्वपतिलोकप्राप्तिः, पर्वणोऽस्य श्रवणमहिमा च | ४२२ |
| ३४– | मृतपुरुषाणामिह स्वपूर्वशरीरेणैव पुनः प्रकटनं कथं सम्भवतीति जनमेजयस्य शङ्काया वैशम्पायनकर्तृकं समाधानम् ... ... | ४२३ |
| ३५– | व्यासप्रसादेन जनमेजयस्य स्वपितृदर्शनप्राप्तिः | ४२३ |
| ३६– | व्यासाज्ञया धृतराष्ट्रादिकर्तृकं पाण्डवेभ्यो गन्तुमनुज्ञाप्रदानं पाण्डवानां दलबलसार्धं हस्तिनापुरगमनम् ... ... | ४२४ |
| | **( नारदागमनपर्वणि )** | |
| ३७– | नारदाद् धृतराष्ट्रादीनां दावाग्नौ दग्धस्य समाचारं श्रुत्वा युधिष्ठिरादीनां विषादः ... | ४२५ |
| ३८– | नारदसमक्षे धृतराष्ट्रादीनां लौकिकाग्नौ दग्धस्य वर्णनं कुर्वतो युधिष्ठिरस्य विलापः, शेषाणां पाण्डवानामपि रोदनं च ... | ४२७ |
| ३९– | युधिष्ठिरेण गङ्गायां धृतराष्ट्रस्य, गान्धार्याः कुन्त्याश्चास्थिविसर्जनं श्राद्धकर्म समापनं च ... | ४२७ |
| | **मौसलपर्वणि** | |
| १– | युधिष्ठिरेणापशकुनदर्शनम्, यादवानां विनाशस्य समाचारश्रवणम्, द्वारकायामृषिशापात्साम्बोदरान्मुसलोत्पत्तिर्मदिरानिषेधस्य भीषणाज्ञा च ... | ४२९ |
| २– | द्वारकायां दारुणानुत्पातान् दृष्ट्वा भगवतः श्रीकृष्णस्य यादवेभ्यस्तीर्थयात्रार्थमादेशः ... | ४३० |
| ३– | कृतवर्मादीनां समस्तयादवानां मिथः संहारः | ४३१ |
| ४– | अर्जुनं सूचयितुं दारुकस्य हस्तिनापुरगमनम्, बभ्रोः शरीरत्यागः रामकृष्णयोः परमधामगमनम् ... ... | ४३२ |
| ५– | द्वारकामागत्य तत्र द्वारकायाः श्रीकृष्णमहिषीणां च दशां विलोक्यार्जुनस्य विषादः | ४३३ |
| ६– | द्वारकायामर्जुनवसुदेवयोर्वार्तालापः ... | ४३४ |
| ७– | वसुदेवस्य तथा मौसलयुद्धे मृतानां यादवानामन्त्येष्टिसंस्कारं कृत्वार्जुनेन द्वारकावासिनां नरनारीणामानयनम्, समुद्रकर्तृकं द्वारकाया निमज्जनम्, मार्गेऽर्जुनोपरि दस्यूनामाक्रमणम्, अवशिष्टानां यादवानामर्जुनकर्तृकं स्वनगरे निवेशनम् ... ... | ४३५ |
| ८– | व्यासार्जुनयोर्वार्तालापः ... ... | ४३७ |
| | **महाप्रस्थानिकपर्वणि** | |
| १– | वृष्णीनां श्राद्धं कृत्वा प्रजाजनाननुमान्य द्रौपदीसहितानां पाण्डवानां महाप्रस्थानम् ... | ४३९ |
| २– | मार्गे द्रौपदीसहदेवनकुलार्जुनभीमसेनानां क्रमशः प्रपतनम्, युधिष्ठिरकर्तृकमेकैकस्य पतनहेतोर्वर्णनम् ... ... | ४४० |
| ३– | युधिष्ठिरस्येन्द्रधर्माभ्यां सह वार्तालापः, स्वधर्मे दृढनिष्ठा, पार्थिवशरीरेण सह स्वर्गगमनं च | ४४१ |
| | **स्वर्गारोहणपर्वणि** | |
| १– | स्वर्गे नारदयुधिष्ठिरयोर्वार्तालापः ... ... | ४४३ |

| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| २—देवदूतेन सार्धं युधिष्ठिरेण मायामयनरकस्यावलोकनं तत्र भ्रातॄणां करुणक्रन्दनं श्रुत्वा तत्रैव स्वस्थितेर्निश्चयनम् | ... ... | ४४४ |
| ३—धर्मेन्द्रयोर्युधिष्ठिरायाश्वासनम्; देहं परित्यज्य युधिष्ठिरस्य दिव्यलोकप्राप्तिः | ... | ४४५ |
| ४—युधिष्ठिरेण दिव्यलोके श्रीकृष्णार्जुनादीनां दर्शनम् | ... ... | ४४६ |
| ५—भीष्मादीनां वीराणां स्वमूलस्वरूपप्राप्तिः, महाभारतस्योपसंहारो माहात्म्यं च | ... | ४४७ |
| अनुष्टुप्छन्दोऽनुसारेण परिगणनया सम्पूर्णमहाभारतस्य श्लोकसंख्या | ... | ४५० |
| महाभारतश्रवणविधिः ( माहात्म्यं कथाश्रवणविधिस्तत्फलं च ) | ... ... | ४५१ |
| महाभारतमाहात्म्यम् | ... ... | ४५४ |



## चित्र-सूचिका

१—देवाधिदेवो भगवान् शंकरः ( तिरंगा )... १

२—अर्जुनस्य भगवता श्रीकृष्णेन सह प्रश्नोत्तरम् ( ,, )...२७५

३—विदुरस्य सूक्ष्मशरीरेण युधिष्ठिरगात्रे प्रवेशः (एकरंगा)...३९५

४—यदुवंशविनाशाय साम्बोदरान्मुसलोत्पत्तिर्भविष्यतीति मुनीनां शापः (एकरंगा)...४२९

५—अग्निदेवप्रेरणयार्जुनेन स्वगाण्डीवधनुषोऽक्षयतूणीरस्य च जले प्रक्षेपः ( ,, )...४३९

६—निजाश्रितस्य कुक्कुरस्य कृते युधिष्ठिरकर्तृको महान् स्वार्थत्यागः ( तिरंगा )...४४३



ॐ

श्रीपरमात्मने नमः

# श्रीमहाभारतम्

## अनुशासनपर्व

### ( दानधर्मपर्व )

### प्रथमोऽध्यायः

युधिष्ठिरं सान्त्वयितुं भीष्मेण गौतमीव्याधसर्पमृत्युकालानां संवादस्योत्थापनम्

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

युधिष्ठिर उवाच

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥ १ ॥
अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह ।
स्वकृते का नु शान्तिः स्याच्छमाद् बहुविधादपि ॥ २ ॥
शराचितशरीरं हि तीव्रव्रणमुदीक्ष्य च ।
शमं नोपलभे वीर दुष्कृतान्येव चिन्तयन् ॥ ३ ॥
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम् ।
त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ॥ ४ ॥
अतः कष्टतरं किं नु मत्कृते यत् पितामहः ।
इमामवस्थां गमितः प्रत्यमित्रै रणाजिरे ॥ ५ ॥
तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः ।
मत्कृते निधनं प्राप्ताः किं नु कष्टतरं ततः ॥ ६ ॥
वयं हि धार्तराष्ट्राश्च कालमन्युवशंगताः ।
कृत्वेदं निन्दितं कर्म प्राप्स्यामः कां गतिं नृप ॥ ७ ॥
इदं तु धार्तराष्ट्रस्य श्रेयो मन्ये जनाधिप ।
इमामवस्थां सम्प्राप्तं यदसौ त्वां न पश्यति ॥ ८ ॥
सोऽहं तव ह्यन्तकरः सुहृद्वधकरस्तथा ।
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ॥ ९ ॥
दुर्योधनो हि समरे सहसैन्यः सहानुजः ।
निहतः क्षत्रधर्मेऽस्मिन् दुरात्मा कुलपांसनः ॥ १० ॥
न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ ।
अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः ॥ ११ ॥
अहं हि समरे वीर गमितः शत्रुभिः क्षयम् ।
अभविष्यं यदि पुरा सह भ्रातृभिरच्युत ॥ १२ ॥
न त्वामेवं सुदुःखार्तमद्राक्षं सायकार्दितम् ।
नूनं हि पापकर्माणो धात्रा सृष्टाः स्म हे नृप ॥ १३ ॥
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्बिषात् ।
तथा प्रशाधि मां राजन् मम चेदिच्छसि प्रियम् ॥ १४ ॥

भीष्म उवाच

परतन्त्रं कथं हेतुमात्मानमनुपश्यसि ।
कर्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ १५ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ १६ ॥
गौतमी नाम कौन्तेय स्थविरा शमसंयुता ।
सर्पेण दष्टं स्वं पुत्रमपश्यद् गतचेतनम् ॥ १७ ॥
अथ तं स्नायुपाशेन बद्ध्वा सर्पममर्षितः ।
लुब्धकोऽर्जुनको नाम गौतम्याः समुपानयत् ॥ १८ ॥
स चाब्रवीदयं ते स पुत्रहा पन्नगाधमः ।
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥ १९ ॥
अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोऽपि वा ।
न ह्ययं बालहा पापश्चिरं जीवितुमर्हति ॥ २० ॥

गौतम्युवाच

विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया ।
को ह्यात्मानं गुरुं कुर्यात् प्राप्तव्यमविचिन्तयन् ॥ २१ ॥
प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः ।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥ २२ ॥
हत्वा चैनं नामृतः स्यादयं मे
जीवत्यस्मिन् कोऽत्ययः स्यादयं ते ।
अस्योत्सर्गे प्राणयुक्तस्य जन्तो-
र्मृत्योर्लोकं को नु गच्छेदनन्तम् ॥ २३ ॥

लुब्धक उवाच

जानाम्यहं देवि गुणागुणज्ञे
सर्वार्तियुक्ता गुरवो भवन्ति ।
स्वस्थस्यैते तूपदेशा भवन्ति
तस्मात् क्षुद्रं सर्पमेनं हनिष्ये ॥ २४ ॥

शमार्थिनः कालगतिं वदन्ति
सद्यः शुचं त्वर्थविदस्त्यजन्ति ।
श्रेयःक्षयं शोचति नित्यमोहात्
तस्माच्छुचं मुञ्च हते भुजङ्गे ॥ २५ ॥

*गौतम्युवाच*

आर्तिर्नैवं विद्यतेऽस्मद्विधानां
धर्मात्मानः सर्वदा सज्जना हि ।
नित्यायस्तो बालकोऽप्यस्य तस्मा-
दीशे नाहं पन्नगस्य प्रमाथे ॥ २६ ॥
न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातनाम् ।
मार्दवात् क्षम्यतां साधो मुच्यतामेष पन्नगः ॥ २७ ॥

*लुब्धक उवाच*

हत्वा लाभः श्रेय एवाव्ययः स्या-
ल्लभ्यो लाभः स्याद् बलिभ्यः प्रशस्तः ।
कालाल्लाभो यस्तु सत्यो भवेत
श्रेयोलाभः कुत्सितेऽस्मिन्न ते स्यात् ॥ २८ ॥

*गौतम्युवाच*

का नु प्राप्तिर्गृह्य शत्रुं निहत्य
का कामाप्तिः प्राप्य शत्रुं न मुक्त्वा ।
कस्मात् सौम्याहं न क्षमे नो भुजङ्गे
मोक्षार्थं वा कस्य हेतोर्न कुर्याम् ॥ २९ ॥

*लुब्धक उवाच*

अस्मादेकाद् बहवो रक्षितव्या
नैको बहुभ्यो गौतमि रक्षितव्यः ।
कृतागसं धर्मविदस्त्यजन्ति
सरीसृपं पापमिमं जहि त्वम् ॥ ३० ॥

*गौतम्युवाच*

नास्मिन् हते पन्नगे पुत्रको मे
सम्प्राप्स्यते लुब्धक जीवितं वै ।
गुणं चान्यं नास्य वधे प्रपश्ये
तस्मात् सर्पं लुब्धक मुञ्च जीवम् ॥ ३१ ॥

*लुब्धक उवाच*

वृत्रं हत्वा देवराट् श्रेष्ठभाग् वै
यज्ञं हत्वा भागमवाप चैव ।
शूली देवो देववृत्तं चर त्वं
क्षिप्रं सर्पं जहि मा भूत् ते विशङ्का ॥ ३२ ॥

*भीष्म उवाच*

असकृत् प्रोच्यमानापि गौतमी भुजगं प्रति ।
लुब्धकेन महाभागा पापे नैवाकरोन्मतिम् ॥ ३३ ॥
ईषदुच्छ्वसमानस्तु कृच्छ्रात् संस्तभ्य पन्नगः ।
उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः ॥ ३४ ॥

*सर्प उवाच*

को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युविवशं यदचूचुदत् ॥ ३५ ॥
तस्यायं वचनाद् दष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किल्बिषम् ॥ ३६ ॥

*लुब्धक उवाच*

यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम् ।
कारणं वै त्वमप्यत्र तस्मात् त्वमपि किल्बिषी ॥ ३७ ॥
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा ।
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ॥ ३८ ॥
किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग ।
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम ॥ ३९ ॥

*सर्प उवाच*

सर्वं एते ह्यस्ववशा दण्डचक्रादयो यथा ।
तथाहमपि तस्मान्मे नैष दोषो मतस्तव ॥ ४० ॥
अथवा मतमेतत्ते तेऽप्यन्योन्यप्रयोजकाः ।
कार्यकारणसंदेहो भवत्यन्योन्यचोदनात् ॥ ४१ ॥
एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ॥ ४२ ॥

*लुब्धक उवाच*

कारणं यदि न स्याद् वै न कर्ता स्यास्त्वमप्युत ।
विनाशकारणं त्वं च तस्माद् वध्योऽसि मे मतः ॥ ४३ ॥
असत्यपि कृते कार्ये नेह पन्नग लिप्यते ।
तस्मान्नात्रैव हेतुः स्याद् वध्यः किं बहु भाषसे ॥ ४४ ॥

*सर्प उवाच*

कार्याभावे क्रिया न स्यात् सत्यसत्यपि कारणे ।
तस्मात् समेऽस्मिन् हेतौ मे वाच्यो हेतुर्विशेषतः ॥ ४५ ॥
यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः ।
अन्यः प्रयोगे स्यादत्र किल्बिषी जन्तुनाशने ॥ ४६ ॥

*लुब्धक उवाच*

वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत् ।
भाषसे किं बहु पुनर्वध्यः सन् पन्नगाधम ॥ ४७ ॥

*सर्प उवाच*

यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः ।
न फलं प्राप्नुवन्त्यत्र फलयोगे तथा ह्यहम् ॥ ४८ ॥

*भीष्म उवाच*

तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते ।
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ॥ ४९ ॥

*मृत्युरुवाच*

प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम् ।
विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः ॥ ५० ॥

मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोरामटवीं दैवचोदितः ॥ १९ ॥
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥ २० ॥
तत्रावगाढः स्त्रीभूतो दैवेनाहं कृतः पुरा ।
नामगोत्राणि चाभाष्य दाराणां मन्त्रिणां तथा ॥ २१ ॥
आह पुत्रांस्ततः सोऽथ स्त्रीभूतः पार्थिवोत्तमः ।
सम्प्रीत्या भुज्यतां राज्यं वनं यास्यामि पुत्रकाः ॥ २२ ॥
एवमुक्त्वा पुत्रशतं वनमेव जगाम ह ।
गत्वा चैवाश्रमं सा तु तापसं प्रत्यपद्यत ॥ २३ ॥
तापसेनास्य पुत्राणामाश्रमेष्वभवच्छतम् ।
अथ साऽऽदाय तान् सर्वान् पूर्वपुत्रानभाषत ॥ २४ ॥
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ।
एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ॥ २५ ॥
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ।
तान् दृष्ट्वा भ्रातृभावेन भुञ्जानान् राज्यमुत्तमम् ॥ २६ ॥
चिन्तयामास देवेन्द्रो मन्युनाथ परिप्लुतः ।
उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ २७ ॥
ततो ब्राह्मणरूपेण देवराजः शतक्रतुः ।
भेदयामास तान् गत्वा नगरं वै नृपात्मजान् ॥ २८ ॥
भ्रातॄणां नास्ति सौभ्रात्रं येष्वेकस्य पितुः सुताः ।
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः ॥ २९ ॥
यूयं भङ्गास्वनापत्यास्तापसस्येतरे सुताः ।
कश्यपस्य सुराश्चैव असुराश्च सुतास्तथा ॥ ३० ॥
युष्माकं पैतृकं राज्यं भुज्यते तापसात्मजैः ।
इन्द्रेण भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ॥ ३१ ॥
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह ।
ब्राह्मणच्छद्मनाभ्येत्य तामिन्द्रोऽथान्वपृच्छत ॥ ३२ ॥
केन दुःखेन संतप्ता रोदिषि त्वं वरानने ।
ब्राह्मणं तं ततो दृष्ट्वा सा स्त्री करुणमब्रवीत् ॥ ३३ ॥
पुत्राणां द्वे शते ब्रह्मन् कालेन विनिपातिते ।
अहं राजाभवं विप्र तत्र पूर्वं शतं मम ॥ ३४ ॥
समुत्पन्नं स्वरूपाणां पुत्राणां ब्राह्मणोत्तम ।
कदाचिन्मृगयां यात उद्भ्रान्तो गहने वने ॥ ३५ ॥
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम ।
पुत्रान् राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ॥ ३६ ॥
स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना ।
आश्रमे जनितं ब्रह्मन् नीतं तन्नगरं मया ॥ ३७ ॥
तेषां च वैरमुत्पन्नं कालयोगेन वै द्विज ।
एतच्छोचाम्यहं ब्रह्मन् दैवेन समभिप्लुता ॥ ३८ ॥
इन्द्रस्तां दुःखितां दृष्ट्वा अब्रवीत् परुषं वचः ।
पुरा सुदुःसहं भद्रे मम दुःखं त्वया कृतम् ॥ ३९ ॥
इन्द्रद्विष्टेन यजता मामनाहूय धिष्ठितम् ।
इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते पातितं मया ॥ ४० ॥
इन्द्रं दृष्ट्वा तु राजर्षिः पादयोः शिरसा गतः ।
प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ॥ ४१ ॥
इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ।
प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ ॥ ४२ ॥
पुत्रास्ते कतमे राजन् जीवन्त्वेतत् प्रचक्ष्व मे ।
स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन् ॥ ४३ ॥
तापसी तु ततः शक्रमुवाच प्रयताञ्जलिः ।
स्त्रीभूतस्य हि ये पुत्रास्ते मे जीवन्तु वासव ॥ ४४ ॥
इन्द्रस्तु विस्मितो दृष्ट्वा स्त्रियं पप्रच्छ तां पुनः ।
पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ॥ ४५ ॥
स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम् ।
कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ॥ ४६ ॥

*स्त्र्युवाच*

स्त्रियास्त्वभ्यधिकः स्नेहो न तथा पुरुषस्य वै ।
तस्मात् ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥ ४७ ॥

*भीष्म उवाच*

एवमुक्तस्ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह ।
सर्वे एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ॥ ४८ ॥
वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत ।
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसे ॥ ४९ ॥

*स्त्र्युवाच*

स्त्रीत्वमेव वृणे शक्र पुंस्त्वं नेच्छामि वासव ।
एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह ॥ ५० ॥
पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं चोदयसे विभो ।
एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ॥ ५१ ॥
स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा ।
एतस्मात् कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ॥ ५२ ॥
रमिताभ्यधिकं स्त्रीत्वे सत्यं वै देवसत्तम ।
स्त्रीभावेन हि तुष्यामि गम्यतां त्रिदशाधिप ॥ ५३ ॥
एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः ।
एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥ ५४ ॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि भङ्गास्वनोपाख्याने द्वादशोऽध्यायः ॥ १२ ॥

# त्रयोदशोऽध्यायः

## वाङ्मनःकायजानां पापानां परित्यागस्योपदेशः

*युधिष्ठिर उवाच*

किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना ।
कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् ॥ १ ॥

*भीष्म उवाच*

कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चैव दशकर्मपथांस्त्यजेत् ॥ २ ॥
प्राणातिपातः स्तैन्यं च परदारानथापि च ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥ ३ ॥
असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥ ४ ॥
अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥ ५ ॥
तस्माद् वाक्कायमनसा नाचरेदशुभं नरः ।
शुभाशुभान्याचरन् हि तस्य तस्याश्नुते फलम् ॥ ६ ॥
अमृतस्य समुत्पत्तौ देवानामसुरैः सह ।
षष्टिवर्षसहस्राणि देवासुरमवर्तत ॥
तत्र देवास्तु दैतेयैर्वध्यन्ते भृशदारुणैः ।
त्रातारं नाधिगच्छन्ति वध्यमाना महासुरैः ॥
आर्तास्ते देवदेवेशं प्रपन्नाः शरणैषिणः ।
पितामहं महाप्राज्ञं वध्यमानाः सुरेतरैः ॥
वैकुण्ठं शरणं देवं प्रतिपेदे च तैः सह ॥
ततः स देवैः सहितः पद्मयोनिर्नरेश्वर ।
तुष्टाव प्राञ्जलिर्भूत्वा नारायणमनामयम् ॥

*ब्रह्मोवाच*

त्वद्रूपचिन्तनान्नाम्नां स्मरणादर्चनादपि ।
तपोयोगादिभिश्चैव श्रेयो यान्ति मनीषिणः ॥
भक्तवत्सल पद्माक्ष परमेश्वर पापहन् ।
परमात्माविकाराद्य नारायण नमोऽस्तु ते ॥
नमस्ते सर्वलोकादे सर्वात्मामितविक्रम ।
सर्वभूतभविष्येश सर्वभूतमहेश्वर ॥
देवानामपि देवस्त्वं सर्वविद्यापरायणः ।
जगद्बीजसमाहार जगतः परमो ह्यसि ॥
त्रायस्व देवता वीर दानवाद्यैः सुपीडिताः ।
लोकांश्च लोकपालांश्च ऋषींश्च जयतां वर ॥
वेदाः साङ्गोपनिषदः सरहस्याः ससंग्रहाः ।
सोङ्काराः सवषट्काराः प्राहुस्त्वां यज्ञमुत्तमम् ॥
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ।
तपस्विनां तपश्चैव दैवतं देवतास्वपि ॥

*भीष्म उवाच*

एवमादिपुरस्कारैर्ऋक्सामयजुषां गणैः ।
वैकुण्ठं तुष्टुवुर्देवाः समेत्य ब्रह्मणा सह ॥
ततोऽन्तरिक्षे वागासीन्मेघगम्भीरनिःस्वना ।
जेष्यध्वं दानवान् यूयं मयैव सह सङ्गरे ॥
ततो देवगणानां च दानवानां च युध्यताम् ।
प्रादुरासीन्महातेजाः शङ्खचक्रगदाधरः ॥
सुपर्णपृष्ठमास्थाय तेजसा प्रदहन्निव ।
व्यधमद् दानवान् सर्वान् बाहुद्रविणतेजसा ॥
तं समासाद्य समरे दैत्यदानवपुङ्गवाः ।
व्यनश्यन्त महाराज पतङ्गा इव पावकम् ॥
स विजित्यासुरान् सर्वान् दानवांश्च महामतिः ।
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥
तं दृष्ट्वान्तर्हितं देवं विष्णुं देवामितद्युतिम् ।
विस्मयोत्फुल्लनयना ब्रह्माणमिदमब्रुवन् ॥

*देवा ऊचुः*

भगवन् सर्वलोकेश सर्वलोकपितामह ।
इदमत्यद्भुतं वृत्तं त्वं नः शंसितुमर्हसि ॥
कोऽयमस्मान् परित्राय तूष्णीमेव यथागतम् ।
प्रतिप्रयातो दिव्यात्मा तं नः शंसितुमर्हसि ॥

*भीष्म उवाच*

एवमुक्तः सुरैः सर्वैर्वचनं वचनार्थवित् ।
उवाच पद्मनाभस्य पूर्वरूपं प्रति प्रभो ॥

*ब्रह्मोवाच*

न ह्येनं वेद तत्त्वेन भुवनं भुवनेश्वरम् ।
संख्यातुं नैव चात्मानं निर्गुणं गुणिनां वरम् ॥
अत्र वो वर्तयिष्यामि इतिहासं पुरातनम् ।
सुपर्णस्य च संवादमृषीणां चापि देवताः ॥
पुरा ब्रह्मर्षयश्चैव सिद्धाश्च भुवनेश्वरम् ।
आश्रित्य हिमवत्पृष्ठे चक्रिरे विविधाः कथाः ॥
तेषां कथयतां तत्र कथान्ते पततां वरः ।
प्रादुरासीन्महातेजा वाहश्चक्रगदाभृतः ॥
स तानृषीन् समासाद्य विनयावनताननः ।
अवतीर्य महावीर्यस्तानृषीनभिजग्मिवान् ॥
अभ्यर्चितः स ऋषिभिः स्वागतेन महाबलः ।
उपाविशत तेजस्वी भूमौ वेगवतां वरः ॥
तमासीनं महात्मानं वैनतेयं महाद्युतिम् ।
ऋषयः परिपप्रच्छुर्महात्मानं तपस्विनः ॥

*ऋषय ऊचुः*

कौतूहलं वैनतेय परं नो हृदि वर्तते ।
तस्य नान्योऽस्ति वक्तेह त्वामृते पन्नगाशन ॥
तदाख्यातमिहेच्छामो भवता प्रश्नमुत्तमम् ।

*गरुड उवाच*

किं मया ब्रूत वक्तव्यं कार्यं च वदतां वराः ॥
यूयं हि मां यथायुक्तं सर्वे वै प्रष्टुमर्हथ ।

*भीष्म उवाच*

नमस्कृत्वा ह्यनन्ताय ततस्ते हृदि सत्तमाः ।
प्रष्टुं प्रचक्रमुस्तत्र वैनतेयं महाबलम् ॥

*ऋषय ऊचुः*

देवदेवं महात्मानं नारायणमनामयम् ।
भवानुपास्ते वरदं कुतोऽसौ कश्च तत्त्वतः ॥
प्रकृतिर्विकृतिर्वास्य कीदृशी क नु संस्थितिः ।
एतद् भवन्तं पृच्छामो देवोऽयं क कृतालयः ॥
एष भक्तप्रियो देवः प्रियभक्तस्तथैव च ।
त्वं प्रियश्चास्य भक्तश्च नान्यः काश्यप विद्यते ॥
शृण्वन्निव मनश्चक्षुर्न्यविभान्यतनुर्विभुः ।
अनादिमध्यनिधनः न विद्मैनं कुतो ह्यसौ ॥
वेदेष्वपि न विश्वात्मा गीयते न च विद्महे ।
तत्त्वतस्तत्त्वभूतात्मा विभुर्नित्यः सनातनः ॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
गुणाश्चैषां यथासंख्यं भावाभावौ तथैव च ॥
तमः सत्त्वं रजश्चैव भावाश्चैव तदात्मकाः ।
मनो बुद्धिश्च तेजश्च बुद्धिगम्यानि तत्त्वतः ॥
जायन्ते तात तस्माद्धि तिष्ठते तेष्वसौ विभुः ।
संचिन्त्य बहुधा बुद्ध्या नाध्यवस्यामहे परम् ॥
तस्य देवस्य तत्त्वेन तन्नः शंस यथातथम् ।

*सुपर्ण उवाच*

स्थूलतो यस्तु भगवांस्तेनैव स्वेन हेतुना ।
त्रैलोक्यस्य तु रक्षार्थं दृश्यते रूपमास्थितः ॥
मया तु महदाश्चर्यं पुरा दृष्टं सनातने ।
देवे श्रीवत्सनिलये तच्छृणुध्वमशेषतः ।
न स शक्यो मया वेत्तुं न भवद्भिः कथंचन ॥
यथा मां प्राह भगवांस्तथा तच्छ्रूयतां मम ।
मयामृतं देवतानां मिषतामृषिसत्तमाः ॥
हृतं विगाह्य तं यन्त्रं विद्राव्यामृतरक्षिणः ।
देवता विमुखीकृत्य सेन्द्राः समरुतो मृधे ॥
तं दृष्ट्वा मम विक्रान्तं वागुवाचाशरीरिणी ।

*अशरीरिणी वागुवाच*

प्रीतोऽस्मि ते वैनतेय कर्मणानेन सुव्रत ।
अवृथा तेऽस्तु मद्वाक्यं ब्रूहि किं करवाणि ते ॥

*सुपर्ण उवाच*

तामेवंवादिनीं वाचमहं प्रत्युक्तवांस्तदा ।
ज्ञातुमिच्छामि कस्त्वं हि ततो मे दास्यसे वरम् ॥
ततो जलदगम्भीरं प्रहस्य गदतां वरः ।
उवाच वरदः प्रीतः काले त्वं मामिवेत्स्यसि ॥
वाहनं भव मे साधु वरं दद्मि तवोत्तमम् ।
न ते वीर्येण सदृशः कश्चिल्लोके भविष्यति ॥
पतङ्ग पततां श्रेष्ठ न देवो नापि दानवः ।
मत्सखित्वमनुप्राप्तो दुर्धर्षश्च भविष्यसि ॥
तमब्रवं देवदेवं मामेवं वादिनं परम् ।
प्रयतः प्राञ्जलिर्भूत्वा प्रणम्य शिरसा विभुम् ॥
एवमेतन्महाबाहो सर्वमेतद् भविष्यति ।
वाहनं ते भविष्यामि यथा वदति मां भवान् ॥
ध्वजस्तेऽहं भविष्यामि रथस्थस्य न संशयः ।
तथास्त्विति स मामुक्त्वा यथाभिप्रायतो गतः ॥
ततोऽहं कृतसंवादस्तेन केनापि सत्तमाः ।
कौतूहलसमाविष्टः पितरं काश्यपं गतः ॥
सोऽहं पितरमासाद्य प्रणिपत्याभिवाद्य च ।
सर्वमेतद् यथातथ्यमुक्तवान् पितुरन्तिके ॥
श्रुत्वा तु भगवान् मह्यं ध्यानमेवान्वपद्यत ।
स मुहूर्तमिव ध्यात्वा मामाह वदतां वरः ॥
धन्योऽस्म्यनुगृहीतोऽसि यत् त्वं तेन महात्मना ।
संवादं कृतवांस्तात गुह्येन परमात्मना ॥
मया हि स महातेजा नान्ययोगसमाधिना ।
तपसोग्रेण तेजस्वी तोषितस्तपसां निधिः ॥
ततो मे दर्शयामास तोषयन्निव पुत्रक ।
श्वेतपीतारुणनिभः कद्रुकपिलपिङ्गलः ॥
रक्तनीलासितनिभः सहस्रोदरपाणिमान् ।
द्विसाहस्रमहावक्त्र एकाक्षः शतलोचनः ॥
समासाद्य तु तं विश्वमहं मूर्ध्ना प्रणम्य च ।
ऋग्यजुःसामभिः स्तुत्वा शरण्यं शरणं गतः ॥
तेन त्वं कृतसंवादः स्वनः सर्वहितैषिणा ।
विश्वरूपेण देवेन पुरुषेण महात्मना ॥
तमेवाराधय क्षिप्रं तमाराध्य न सीदसि ।
सोऽहमेवं भगवता पित्रा ब्रह्मर्षिसत्तमाः ॥
अनुनीतो यथान्यायं स्वमेव भवनं गतः ।
सोऽहमामन्त्र्य पितरं तद्भावगतमानसः ॥
स्वमेवालयमासाद्य तमेवार्थमचिन्तयम् ।
तद्भावगतभावात्मा तद्भूतगतमानसः ॥
गोविन्दं चिन्तयन्नास्से शाश्वतं परमव्ययम् ।
धृतं बभूव हृदयं नारायणदिदृक्षया ॥
सोऽहं वेगं समास्थाय मनोमारुतवेगवान् ।
रम्यां विशालां बदरीं गतो नारायणाश्रमम् ॥

ततस्तत्र हरिं दृष्ट्वा जगतः प्रभवं विभुम्।
गोविन्दं पुण्डरीकाक्षं प्रणतः शिरसा हरिम् ॥
ऋग्यजुःसामभिश्चैनं तुष्टाव परया मुदा।
सोऽहं प्रपन्नः शरणं देवदेवं सनातनम्।
प्राञ्जलिर्मनसा भूत्वा वाक्यमेतत् तदोक्तवान्॥
भगवन् भूतभव्येश भवद्भूतकृदव्यय।
शरणं सम्प्रपन्नं मां त्रातुमर्हस्यरिंदम ॥
अहं तु तत्त्वजिज्ञासुः कोऽसि कस्यासि कुत्र वा।
सम्प्राप्तः पदवीं देव स मां संत्रातुमर्हसि ॥

श्रीभगवानुवाच

मम त्वं विदितः सौम्य यथावत् तत्त्वदर्शने।
ज्ञापितश्चापि यत् पित्रा तच्चापि विदितं महत् ॥
वैनतेय न कस्यापि अहं वेद्यः कथंचन।
मां हि विन्दन्ति विद्वांसो ये ज्ञाने परिनिष्ठिताः॥
निर्ममा निरहङ्कारा निराशीर्वन्धनायुताः।
भवांस्तु सततं भक्तो मन्मनाः पक्षिसत्तम ॥
स्थूलं मां वेत्स्यसे तस्माज्जगतः कारणे स्थितम्।

सुपर्ण उवाच

एवं दत्ताभयस्तेन ततोऽहमृषिसत्तमाः।
नष्टखेदश्रमभयः क्षणेन ह्यभवं तदा ॥
स शनैर्याति भगवान् गत्या लघुपराक्रमः।
अहं तु सुमहावेगमास्थायानुव्रजामि तम् ॥
स गत्वा दीर्घमध्वानमाकाशममितद्युतिः।
मनसाप्यगमं देशमाससादात्मतत्त्ववित् ॥
अथ देवः समासाद्य मनसः सदृशं जवम्।
मोहयित्वा च मां तत्र क्षणेनान्तरधीयत ॥
तत्राम्बुधरधीरेण भोःशब्देनानुनादिना।
अयं भोऽहमिति प्राह वाक्यं वाक्यविशारदः ॥
शब्दानुसारी तु ततस्तं देशमहमाव्रजम्।
तत्रापश्यं ततश्चाहं श्रीमद्धंसयुतं सरः ॥
स तत्सरः समासाद्य भगवानात्मवित्तमः।
भोःशब्दप्रतिसृष्टेन स्वरेणाप्रतिवादिना ॥
विवेश देवः स्वां योनिं मामिदं चाभ्यभाषत।

श्रीभगवानुवाच

विशस्व सलिलं सौम्य सुखमत्र वसामहे।

सुपर्ण उवाच

ततश्च प्राविशं तत्र सह तेन महात्मना।
दृष्टवानद्भुततरं तस्मिन् सरसि भास्वताम् ॥
अग्नीनां सुप्रणीतानामिद्धानामिन्धनैर्विना।
दीप्तानामाज्यसिक्तानां स्थानेष्वर्चिष्मतां सदा ॥
दीप्तिस्तेषामनाज्यानां प्राप्ताज्यानामिवाभवत्।
अनिद्धानामिव सतामिद्धानामिव भास्वताम् ॥
अथाहं वरदं देवं नापश्यं तत्र सङ्गतम्।

तेषां तत्राग्निहोत्राणामीडितानां सहस्रशः॥
समीपे त्वद्भुततममपश्यमहमव्ययम्।
एषु चाग्निसमीपेषु शुश्राव सुपदाक्षराः ॥
प्रभावान्तर्हितानां तु प्रस्पष्टाक्षरभाषिणाम्।
ऋग्यजुःसामगानां च मधुराः सुस्वरा गिरः॥
तान्यनेकसहस्राणि परीयंस्तु महाजवान्।
अपश्यमानस्तं देवं ततोऽहं व्यथितोऽभवम् ॥
ततस्तेष्वग्निहोत्रेषु ज्वलत्सु विमलार्चिषु।
भानुमत्सु न पश्यामि देवदेवं सनातनम् ॥
ततोऽहं तानि दीप्तानि परीय व्यथितेन्द्रियः।
नान्तं तेषां प्रपश्यामि येनाहमिह चोदितः ॥
एवं चिन्तासमापन्नः प्रध्यातुमुपचक्रमे।
विनयावनतो भूत्वा नमश्चक्रे महात्मने ॥
अनादिनिधनायैभिर्नामभिः परमात्मने।
नारायणाय शुद्धाय शाश्वताय ध्रुवाय च ॥
भूतभव्यभवेशाय शिवाय शिवमूर्तये।
शिवयोनेः शिवाद्याय शिवपूज्यतमाय च ॥
घोररूपाय महते युगान्तकरणाय च।
विश्वाय विश्वदेवाय विश्वेशाय महात्मने ॥
सहस्रोदरपादाय सहस्रनयनाय च।
सहस्रबाहवे चैव सहस्रवदनाय च ॥
शुचिश्रवाय महते ऋतुसंवत्सराय च।
ऋग्यजुःसामवक्त्राय अथर्वशिरसे नमः ॥
हृषीकेशाय कृष्णाय द्रुहिणोरुक्रमाय च।
बृहोन्द्रकाय तार्क्ष्याय वराहायैकशृङ्गिणे ॥
शिपिविष्टाय सत्याय हरयेऽथ शिखण्डिने।
हुतायोर्ध्वाय वक्त्राय रौद्रानीकाय साधवे ॥
सिन्धवे सिन्धुवर्षघ्ने देवानां सिन्धवे नमः।
गरुत्मते त्रिनेत्राय सुधामाय वृषावृषे ॥
सम्राडुग्रे संकृतये विरजे सम्भवे भवे।
वृषाय वृषरूपाय विभवे भूर्भवाय च ॥
दीप्तसृष्टाय यज्ञाय स्थिराय स्थविराय च।
अच्युताय तुषाराय वीराय च समाय च ॥
जिष्णवे पुरुहूताय वशिष्ठाय वराय च।
सत्येशाय सुरेशाय हरयेऽथ शिखण्डिने ॥
बर्हिषाय वरेण्याय वसवे विश्ववेधसे।
किरीटिने सुकेशाय वासुदेवाय शुष्मिणे ॥
बृहदुक्थसुषेणाय युग्मे दुन्दुभये तथा।
भवेसखाय विभवे भरद्वाजाभयाय च ॥
भास्कराय वरेन्द्राय पद्मनाभाय भूरिणे।
पुनर्वसुभृतत्वाय जीवप्रभविषाय च ॥
वषट्काराय स्वाहायै स्वधायै निधनाय च।
ऋचे च यजुषे साम्ने त्रैलोक्यपतये नमः ॥

श्रीपद्मायात्मसदृशे धरणे धारणे परे।
सौम्याय सौम्यरूपाय सौम्ये सुमनसे नमः॥
विश्वाय च सुविश्वाय विश्वरूपधराय च।
केशवाय सुकेशाय रश्मिकेशाय भूरिणे॥
हिरण्यगर्भाय नमः सौम्याय वृषरूपिणे।
नारायणाग्र्यवपुषे पुरुहूताय वज्रिणे॥
धर्मिणे वृषसेनाय धर्मसेनाय रोधसे।
मुनये ज्वरमुक्ताय ज्वराधिपतये नमः॥
अनेत्राय त्रिनेत्राय पिङ्गलाय विड्डमिणे।
तपोब्रह्मनिधानाय युगपर्यायिणे नमः॥
शरणाय शरण्याय शक्तेष्टशरणाय च।
नमः सर्वभवेशाय भूतभव्यभवाय च॥
पाहि मां देवदेवेश कोऽप्यजोऽसि सनातन।
एवं गतोऽसि शरणं शरण्यं ब्रह्मयोनिनाम्॥
स्तव्यं स्तवं स्तुतवतस्तत् तमो मे प्रणश्यत।
शृणोमि च गिरं दिव्यामन्तर्धानगतां शिवाम्।

*श्रीभगवानुवाच*

मा भैर्गरुत्मन् दान्तोऽसि पुनः सेन्द्रान् दिवौकसः॥
स्वं चैव भवनं गत्वा द्रक्ष्यसे पुत्रबान्धवान्।

*सुपर्ण उवाच*

ततस्तस्मिन् क्षणेनैव सहसैव महाद्युतिः॥
प्रत्यदृश्यत तेजस्वी पुरस्तात् स ममान्तिके।
समागम्य ततस्तेन शिवेन परमात्मना॥
अपश्यं चाहमायान्तं नरनारायणाश्रमे।
चतुर्द्विगुणविन्यासं तं च देवं सनातनम्॥
यजतस्तानृषीन् देवान् वदतो ध्यायतो मुनीन्।
युक्तान् सिद्धान् नैष्ठिकांश्च जपतो यजतो गृहीन्॥
पुष्पपूरपरिक्षिप्तं धूपितं दीपितं हितम्।
वन्दितं सिक्तसम्मृष्टं नरनारायणाश्रमम्॥
तदद्भुतमहं दृष्ट्वा विस्मितोऽस्मि तदानघाः।
जगाम शिरसा देवं प्रयतेनान्तरात्मना॥
तदत्यद्भुतसंकाशं किमेतदिति चिन्तयन्।
नाध्यगच्छं परं दिव्यं तस्य सर्वभवात्मनः॥
प्रणिपत्य सुदुर्धर्षं पुनः पुनरुदीक्ष्य च।
शिरस्यञ्जलिमाधाय विस्मयोत्फुल्ललोचनः॥
अवोचं तमदीनार्थं श्रेष्ठानां श्रेष्ठमुत्तमम्।
नमस्ते भगवन् देव भूतभव्यभवत्प्रभो॥
यदेतदद्भुतं देव मया दृष्टं त्वादृशयम्।
अनादिमध्यपर्यन्तं किं तच्छंसितुमर्हसि॥
यदि जानासि मां भक्तं यदि वानुग्रहो मयि।
शंस सर्वमशेषेण श्रोतव्यं यदि चेन्मया॥
स्वभावस्तव दुर्ज्ञेयः प्रादुर्भावोऽभवस्य च।
भवद्भूतभविष्येश सर्वथा गहनो भवान्॥
ब्रूहि सर्वमशेषेण तदाश्चर्यं महामुने।
किं तदत्यद्भुतं वृत्तं तेष्वग्निषु समन्ततः॥
कानि तान्यग्निहोत्राणि केषां शब्दः श्रुतो मया।
शृण्वतां ब्रह्म सततमदृश्यानां महात्मनाम्॥
एतन्मे भगवन् कृष्ण ब्रूहि सर्वमशेषतः।
गृणन्त्यग्निसमीपेषु के च ते ब्रह्मराशयः॥

*श्रीभगवानुवाच*

मां न देवा न गन्धर्वा न पिशाचा न राक्षसाः।
विदुस्तत्त्वेन तत्त्वस्थं सूक्ष्मात्मानमवस्थितम्॥
चतुर्धाहं विभक्तात्मा लोकानां हितकाम्यया।
भूतभव्यभविष्यादिरनादिर्विश्वकृत्तमः॥
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्।
मनो बुद्धिश्च तेजश्च तमः सत्त्वं रजस्तथा॥
प्रकृतिर्विकृतिश्चेति विद्याविद्ये शुभाशुभे।
मत्त एतानि जायन्ते नाहमेभ्यः कथंचन॥
यत् किंचिच्छ्रेयसा युक्तः श्रेष्ठभावं व्यवस्यति।
धर्मयुक्तं च पुण्यं च सोऽहमस्मि निरामयः॥
यः स्वभावात्मतत्त्वज्ञैः कारणैरुपलक्ष्यते।
अनादिमध्यनिधनः सोऽन्तरात्मास्मि शाश्वतः॥
यत् तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः।
गृह्यते सूक्ष्मभावज्ञैः स विभाव्योऽस्मि शाश्वतः॥
यत् तु मे परमं गुह्यं येन व्याप्तमिदं जगत्।
सोऽहं गतः सर्वसत्त्वः सर्वस्य प्रभवोऽव्ययः॥
मत्तो जातानि भूतानि मया धार्यन्त्यहर्निशम्।
मय्येव विलयं यान्ति प्रलये पन्नगाशन॥
यो मां यथा वेदयति तस्य तस्यास्मि काश्यप।
मनोबुद्धिगतः श्रेयो विदधामि विहङ्गम॥
मां तु ज्ञातुं कृता बुद्धिर्भवता पक्षिसत्तम।
शृणु योऽहं यतश्चाहं यदर्थं चाहमुद्यतः॥
ये केचिन्नियतात्मानस्त्रेताग्निपरमा द्विजाः।
अग्निकार्यपरा नित्यं जपहोमपरायणाः॥
आत्मन्यग्नीन् समाधाय नियता नियतेन्द्रियाः।
अनन्यमनसस्ते मां सर्वे वै समुपासते॥
यजन्तो जपयज्ञैर्मां मानसैश्च सुसंयताः।
अग्नीनभ्युद्यगुः शश्वदग्निष्वेवाभिसंस्थिताः॥
अनन्यकार्याः शुचयो नित्यमग्निपरायणाः।
य एवंबुद्धयो धीरास्ते मां गच्छन्ति तादृशाः॥
अकामहतसंकल्पा ज्ञाने नित्यं समाहिताः।
आत्मन्यग्नीन् समाधाय निराहारा निराशिषः॥
विषयेषु निरारम्भा विमुक्ता ज्ञानचक्षुषः।
अनन्यमनसो धीराः स्वभावनियमान्विताः॥
यत् तद् वियति दृष्टं तत् सरः पद्मोत्पलायुतम्।
तत्राग्नयः संनिहिता दीप्यन्ते स्म निरिन्धनाः॥

ज्ञानामलाशयास्तस्मिन् ये च चन्द्रांशुनिर्मलाः ।
उपासीना गृणन्तोऽग्निं प्रस्पष्टाक्षरभाषिणः ॥
आकाङ्क्षमाणाः शुचयस्तेष्वग्निषु विहङ्गम ।
ये मया भावितात्मानो मय्येवाभिरताः सदा ॥
उपासते च मामेव ज्योतिर्भूता निरामयाः ।
तैर्हि तत्रैव वस्तव्यं नीरागात्मभिरच्युतैः ॥
निराहारा ह्यनिष्यन्दाश्चन्द्रांशुसदृशप्रभाः ।
निर्मला निरहंकारा निरालम्बा निराशिषः ॥
मद्भक्ताः सततं ते वै भक्तस्तानपि चाप्यहम् ।
चतुर्धाहं विभक्तात्मा चरामि जगतो हितः ॥
लोकानां धारणार्थाय विधानं विदधामि च ।
यथावत्तदशेषेण श्रोतुमर्हति मे भवान् ॥
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ॥
सृष्टं संहरते चैका जगत् स्थावरजङ्गमम् ।
आत्मनिष्ठा क्षपयन् मोहयन्निव मायया ॥
क्षिपन्ती मोहयन्ती च ह्यात्मनिष्ठा स्वमायया ।
चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ॥
रक्षते चापि नियता सोऽहमस्मि नभश्चर ।
मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ॥
अहं सर्वजगद्बीजं सर्वत्रगतिरव्ययः ।
यानि तान्यग्निहोत्राणि ये च चन्द्रांशुराशयः ।
गृणन्ति वेद सततं तेष्वग्निषु विहङ्गम ॥
क्रमेण मां समायान्ति सुखिनो ज्ञानसंयुताः ।
तेषामहं तपो दीप्तं तेजः सम्यक् समाहितम् ।
नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ॥
सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यः समासादयितुमहं वै ज्ञानचक्षुषा ॥
एकान्तिनो ध्यानपरा यतिभावाद् व्रजन्ति माम् ।
सत्त्वयुक्ता मतिर्येषां केवलाऽऽत्मविनिश्चिता ॥
ते पश्यन्ति स्वमात्मानं परमात्मानमव्ययम् ।
अहिंसा सर्वभूतेषु तेष्ववस्थितमार्जवम् ॥
तेष्वेव च समाधाय सम्यगेति स मामजम् ।
यदेतत् परमं गुह्यमाख्यानं परमाद्भुतम् ॥
यत्नेन तदशेषेण यथावच्छ्रोतुमर्हसि ।
ये त्वग्निहोत्रनियता जपयज्ञपरायणाः ॥
ये मामुपासते शश्वदेतांस्त्वं दृष्टवानसि ।
शास्त्रदृष्टविधानज्ञा असक्ताः क्वचिदन्यथा ॥
शक्योऽहं वेदितुं तैस्तु यन्मे परममव्ययम् ।
तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्मात्मविच्छुचिः ॥
आसादयति तद् ब्रह्म यत्र गत्वा न शोचति ।
शुद्धाभिजनसम्पन्नाः श्रद्धायुक्तेन चेतसा ॥
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिम् ।
यद् गुह्यं परमं बुद्धेरलिङ्गग्रहणं च यत् ॥
तत् सूक्ष्मं गृह्यते विप्रैर्यतिभिस्तत्त्वदर्शिभिः ।
न वायुः पवते तत्र न तस्मिञ्ज्योतिषां गतिः ॥
न चापः पृथिवी नैव नाकाशं न मनोगतिः ।
तस्माच्चैतानि सर्वाणि प्रजायन्ते विहङ्गम ॥
सर्वेभ्यश्च स तेभ्यश्च प्रभवत्यमलो विभुः ।
स्थूलदर्शनमेतन्मे यद् दृष्टं भवतानघ ॥
एतत् सूक्ष्मस्य च द्वारं कार्याणां कारणं त्वहम् ।
दृष्टो वै भवता तस्मात् सरस्यमितविक्रम ॥
मां यज्ञमाहुर्यज्ञज्ञा वेदं वेदविदो जनाः ।
मुनयश्चापि मामेव जपयज्ञं प्रचक्षते ॥
वक्ता मन्ता रसयिता घ्राता द्रष्टा प्रदर्शकः ।
बोद्धा बोधयिता चाहं गन्ता श्रोता चिदात्मकः ॥
मामिष्ट्वा स्वर्गमायान्ति तथा चाप्नुवते महत् ।
ज्ञात्वा मामेव चैवं ते निःसङ्गेनान्तरात्मना ॥
अहं तेजो द्विजातीनां मम तेजो द्विजातयः ।
मम यस्तेजसा देहः सोऽग्निरित्यवगम्यताम् ॥
प्राणपालः शरीरेऽहं योगिनामहमीश्वरः ।
सांख्यानामिदमेवाग्रे मयि सर्वमिदं जगत् ॥
धर्ममर्थं च कामं च मोक्षं चैवार्जवं जपम् ।
तमः सत्त्वं रजश्चैव कर्मजं च भवाप्ययम् ॥
स तदाहं तथारूपस्त्वया दृष्टः सनातनः ।
ततस्त्वहं परतरः शक्यः कालेन वेदितुम् ॥
मम यत् परमं गुह्यं शाश्वतं ध्रुवमव्ययम् ।
तदेवं परमो गुह्यो देवो नारायणो हरिः ॥
न तच्छक्यं भुजङ्गारे वेत्तुमभ्युदयान्वितैः ।
निरारम्भनमस्कारा निराशीर्बन्धनास्तथा ॥
गच्छन्ति तं महात्मानं परं ब्रह्म सनातनम् ।
स्थूलोऽहमेवं विहग त्वया दृष्टस्तथानघ ॥
एतच्चापि न वेत्त्यन्यस्त्वामृते पन्नगाशन ।
मा मतिस्तव गान्धारामेषा गतिरनुत्तमा ॥
मद्भक्तो भव नित्यं त्वं ततो वेत्स्यसि मे पदम् ।
एतत् ते सर्वमाख्यातं रहस्यं दिव्यमानुषम् ॥
एतच्छ्रेयः परं चैतत् पन्थानं विद्धि मोक्षिणाम् ।

सुपर्ण उवाच

एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ॥
पश्यतो मे महायोगी जगामात्मगतिर्गतिम् ।
एतदेवंविधं तस्य महिमानं महात्मनः ॥
अच्युतस्याप्रमेयस्य दृष्टवानस्मि यत् पुरा ।
एतद् वः सर्वमाख्यातं चेष्टितं तस्य धीमतः ॥
मयानुभूतं प्रत्यक्षं दृष्ट्वा चाद्भुतकर्मणः ।

ऋषय ऊचुः

अहो श्रावितमाख्यानं भवतात्यद्भुतं महत् ॥

पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
एतत् पवित्रं देवानामेतद् गुह्यं परंतप ॥
एतज्ज्ञानवतां ज्ञेयमेषा गतिरनुत्तमा ।
य इमां श्रावयेद् विद्वान् कथां पर्वसु पर्वसु ॥
स लोकान् प्राप्नुयात् पुण्यान् देवर्षिभिरभिष्टुतान् ।
श्राद्धकाले च विप्राणां य इमां श्रावयेच्छुचिः ॥
न तत्र रक्षसां भागो नासुराणां च विद्यते ।
अनसूयुर्जितक्रोधः सर्वसत्त्वहिते रतः ॥
यः पठेत् सततं युक्तः स व्रजेत् तत्सलोकताम् ।
वेदान् पारयते विप्रो राजा विजयवान् भवेत् ॥
वैश्यस्तु धनधान्याढ्यः शूद्रः सुखमवाप्नुयात् ।

*भीष्म उवाच*

ततस्ते मुनयः सर्वे सम्पूज्य विनतासुतम् ।
स्वानेव चाश्रमाञ्जग्मुर्बभूवुः शान्तितत्पराः ॥
स्थूलदर्शिभिराकृष्टो दुर्ज्ञेयो ह्यकृतात्मभिः ।
एषा श्रुतिर्महाराज धर्म्या धर्मभृतां वर ॥
सुराणां ब्रह्मणा प्रोक्ता विस्मितानां परंतप ।
ममाप्येषा कथा तात कथिता मातुरन्तिके ॥
वसुभिः सत्त्वसम्पन्नैः तवाप्येषा मयोच्यते ।
तदग्निहोत्रपरमा जपयज्ञपरायणाः ॥
निराशीर्बन्धनाः सन्तः प्रयान्त्यक्षरसात्मताम् ।
आरम्भयज्ञानुत्सृज्य जपहोमपरायणाः ।
ध्यायन्तो मनसा विष्णुं गच्छन्ति परमां गतिम् ॥
तदेव परमो मोक्षो मोक्षद्वारं च भारत ।
यदा विनिश्चितात्मानो गच्छन्ति परमां गतिम् ॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि लोकयात्राकथने त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः

**भीष्मस्याज्ञया भगवता श्रीकृष्णेन युधिष्ठिरं प्रति कथ्यमानायां शिवमाहात्म्यकथायामुपमन्युना महादेवस्य स्तुतिप्रार्थनापूर्वकं तद्दर्शनवरप्राप्त्योरुल्लेखः स्वयं कृतस्य शिवदर्शनस्य कथनं च**

*युधिष्ठिर उवाच*

त्वयाऽऽपगेय नामानि श्रुतानीह जगत्पतेः ।
पितामहेशाय विभो नामान्याचक्ष्व शम्भवे ॥ १ ॥
बभ्रवे विश्वरूपाय महाभाग्यं च तत्त्वतः ।
सुरासुरगुरौ देवे शंकरेऽव्यक्तयोनये ॥ २ ॥

*भीष्म उवाच*

अशक्तोऽहं गुणान् वक्तुं महादेवस्य धीमतः ।
यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ॥ ३ ॥
ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च ।
ब्रह्मादयः पिशाचान्ता यं हि देवा उपासते ॥ ४ ॥
प्रकृतीनां परत्वेन पुरुषस्य च यः परः ।
चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ।
अक्षरं परमं ब्रह्म असच्च सदसच्च यः ॥ ५ ॥
प्रकृतिं पुरुषं चैव क्षोभयित्वा स्वतेजसा ।
ब्रह्माणमसृजत् तस्माद् देवदेवः प्रजापतिः ॥ ६ ॥
को हि शक्तो गुणान् वक्तुं देवदेवस्य धीमतः ।
गर्भजन्मजरायुक्तो मर्त्यो मृत्युसमन्वितः ॥ ७ ॥
को हि शक्तो भवं ज्ञातुं मद्विधः परमेश्वरम् ।
ऋते नारायणात् पुत्र शङ्खचक्रगदाधरात् ॥ ८ ॥
एष विद्वान् गुणश्रेष्ठो विष्णुः परमदुर्जयः ।
दिव्यचक्षुर्महातेजा वीक्षते योगचक्षुषा ॥ ९ ॥
रुद्रभक्त्या तु कृष्णेन जगद् व्याप्तं महात्मना ।
तं प्रसाद्य तदा देवं बदर्यां किल भारत ॥ १० ॥
अर्थात् प्रियतरत्वं च सर्वलोकेषु वै तदा ।
प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात् ॥ ११ ॥
पूर्णं वर्षसहस्रं तु तप्तवानेष माधवः ।
प्रसाद्य वरदं देवं चराचरगुरुं शिवम् ॥ १२ ॥
युगे युगे तु कृष्णेन तोषितो वै महेश्वरः ।
भक्त्या परमया चैव प्रीतश्चैव महात्मनः ॥ १३ ॥
ऐश्वर्यं यादृशं तस्य जगद्योनेर्महात्मनः ।
तदयं दृष्टवान् साक्षात् पुत्रार्थे हरिरच्युतः ॥ १४ ॥
यस्मात् परतरं चैव नान्यं पश्यामि भारत ।
व्याख्यातुं देवदेवस्य शक्तो नामान्यशेषतः ॥ १५ ॥
एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान् ।
विभूतिं चैव कार्त्स्न्येन सत्यां माहेश्वरीं नृप ॥ १६ ॥

*वैशम्पायन उवाच*

एवमुक्त्वा तदा भीष्मो वासुदेवं महायशाः ।
भवमाहात्म्यसंयुक्तमिदमाह पितामहः ॥ १७ ॥

*भीष्म उवाच*

सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि ।
शिवाय विश्वरूपाय यन्मां पृच्छद् युधिष्ठिरः ॥ १८ ॥
नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मयोनिना ।
निवेदितं ब्रह्मलोके ब्रह्मणो यत् पुराभवत् ॥ १९ ॥
द्वैपायनप्रभृतयस्तथा चेमे तपोधनाः ।
ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ॥ २० ॥

ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये ।
महाभाग्यं विभोर्ब्रूहि मुण्डिनेऽथ कपर्दिने ॥ २१ ॥

*वासुदेव उवाच*

न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः ।
हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः ॥ २२ ॥
न विदुर्यस्य भवनमादित्याः सूक्ष्मदर्शिनः ।
स कथं नरमात्रेण शक्यो ज्ञातुं सतां गतिः ॥ २३ ॥
तस्याहमसुरघ्नस्य कांश्चिद् भगवतो गुणान् ।
भवतां कीर्तयिष्यामि व्रतेशाग्र्य यथातथम् ॥ २४ ॥

*वैशम्पायन उवाच*

एवमुक्त्वा तु भगवान् गुणांस्तस्य महात्मनः ।
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ॥ २५ ॥

*वासुदेव उवाच*

शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वं च तात युधिष्ठिर ।
त्वं चापगेय नामानि शृणुष्वेह कपर्दिने ॥ २६ ॥
यदवाप्तं च मे पूर्वं साम्बहेतोः सुदुष्करम् ।
यथावद् भगवान् दृष्टो मया पूर्वं समाधिना ॥ २७ ॥
शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता ।
अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् ॥ २८ ॥
प्रद्युम्नचारुदेष्णादीन् रुक्मिण्या वीक्ष्य पुत्रकान् ।
पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ॥ २९ ॥
शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषम् ।
आत्मतुल्यं मम सुतं प्रयच्छाच्युत माचिरम् ॥ ३० ॥
न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किंचन ।
लोकान् सृजेस्त्वमपरानिच्छन् यदुकुलोद्वह ॥ ३१ ॥
त्वया द्वादशवर्षाणि व्रतीभूतेन शुष्यता ।
आराध्य पशुभर्तारं रुक्मिण्यां जनिताः सुताः ॥ ३२ ॥
चारुदेष्णः सुचारुश्च चारुवेशो यशोधरः ।
चारुश्रवाश्चारुयशाः प्रद्युम्नः शम्भुरेव च ॥ ३३ ॥
यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः ।
तथा ममापि तनयं प्रयच्छ मधुसूदन ॥ ३४ ॥
इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम् ।
अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ ३५ ॥
सा च मामब्रवीद् गच्छ शिवाय विजयाय च ।
ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोऽनुगाः ॥ ३६ ॥
क्षेत्रौषध्यो यज्ञवाहाश्छन्दांस्यृषिगणाध्वराः ।
समुद्रा दक्षिणास्तोभा ऋक्षाणि पितरो ग्रहाः ॥ ३७ ॥
देवपत्न्यो देवकन्या देवमातर एव च ।
मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ॥ ३८ ॥
सावित्री ब्रह्मविद्या च ऋतवो वत्सरास्तथा ।
क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः ॥ ३९ ॥
रक्षन्तु सर्वत्र गतं त्वां यादव सुखाय च ।
अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ॥ ४० ॥

एवं कृतस्वस्त्ययनस्तयाहं
ततोऽभ्यनुज्ञाय नरेन्द्रपुत्रीम् ।
पितुः समीपं नरसत्तमस्य
मातुश्च राज्ञश्च तथाऽऽहुकस्य ॥ ४१ ॥
गत्वा समावेद्य यदब्रवीन्मां
विद्याधरेन्द्रस्य सुता भृशार्ता ।
तानभ्यनुज्ञाय तदातिदुःखाद्
गदं तथैवातिबलं च रामम् ।
अथोचतुः प्रीतियुतौ तदानीं
तपःसमृद्धिर्भवतोऽस्त्वविघ्नम् ॥ ४२ ॥

प्राप्यानुज्ञां गुरुजनादहं तार्क्ष्यमचिन्तयम् ।
सोऽवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्जयम् ॥ ४३ ॥
तत्राहमद्भुतान् भावानपश्यं गिरिसत्तमे ।
क्षेत्रं च तपसां श्रेष्ठं पश्याम्यद्भुतमुत्तमम् ॥ ४४ ॥
दिव्यं वैयाघ्रपद्यस्य उपमन्योर्महात्मनः ।
पूजितं देवगन्धर्वैर्ब्राह्म्या लक्ष्म्या समावृतम् ॥ ४५ ॥

धवककुभकदम्बनारिकेलैः
कुरबककेतकजम्बुपाटलाभिः ।
वटवरुणकवत्सनाभबिल्वैः
सरलकपित्थप्रियालसालतालैः ॥ ४६ ॥

बदरीकुन्दपुन्नागैरशोकाम्रातिमुक्तकैः ।
मधूकैः कोविदारैश्च चम्पकैः पनसैस्तथा ॥ ४७ ॥
वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् ।
पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितम् ॥ ४८ ॥
नानाशकुनिसम्भोज्यैः फलैर्वृक्षैरलंकृतम् ।
यथास्थानविनिक्षिप्तैर्भूषितं भस्मराशिभिः ॥ ४९ ॥
रुरुवानरशार्दूलसिंहद्वीपिसमाकुलम् ।
कुरङ्गबर्हिणाकीर्णं मार्जारभुजगावृतम् ।
पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम् ॥ ५० ॥

सकृत्प्रभिन्नैश्च गजैर्विभूषितं
प्रहृष्टनानाविधपक्षिसेवितम् ।
सुपुष्पितैरम्बुधरप्रकाशै-
र्महीरुहाणां च वनैर्विचित्रैः ॥ ५१ ॥

नानापुष्परजोमिश्रो गजदानाधिवासितः ।
दिव्यस्त्रीगीतबहुलो मारुतोऽभिमुखो ववौ ॥ ५२ ॥

धारानिनादैर्विहगप्रणादैः
शुभैस्तथा बृंहितैः कुञ्जराणाम् ।
गीतैस्तथा किन्नराणामुदारैः
शुभैः स्वनैः सामगानां च वीर ॥ ५३ ॥

अचिन्त्यं मनसाप्यन्यैः सरोभिः समलंकृतम् ।
विशालैश्चाग्निशरणैर्भूषितं कुसुमावृतैः ॥ ५४ ॥

विभूषितं पुण्यपवित्रतोयया
सदा च जुष्टं नृप जह्नुकन्यया।
विभूषितं धर्मभृतां वरिष्ठै-
र्महात्मभिर्वह्निसमानकल्पैः ॥ ५५ ॥
वाय्वाहारैरम्बुपैर्जप्यनित्यैः
सम्प्रक्षालैर्योगिभिर्ध्याननित्यैः।
धूमप्राशैरूष्मपैः क्षीरपैश्च
संजुष्टं च ब्राह्मणेन्द्रैः समन्तात्॥ ५६ ॥
गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिकास्तथा।
मरीचिपाः फेनपाश्च तथैव मृगचारिणः ॥ ५७ ॥
अश्वत्थफलभक्षाश्च तथा ह्युदकशायिनः।
चीरचर्माम्बरधरास्तथा वल्कलधारिणः ॥ ५८ ॥
सुदुःखान् नियमांस्तांस्तान् वहतः सुतपोधनान्।
पश्यन् मुनीन् बहुविधान् प्रवेष्टुमुपचक्रमे ॥ ५९ ॥
सुपूजितं देवगणैर्महात्मभिः
शिवादिभिर्भारत पुण्यकर्मभिः।
रराज तच्चाश्रममण्डलं सदा
दिवीव राजञ्शशिमण्डलं यथा ॥६०॥
क्रीडन्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत्।
प्रभावाद् दीप्ततपसां संनिकर्षान्महात्मनाम् ॥ ६१ ॥
तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरमे।
सेविते द्विजशार्दूलैर्वेदवेदाङ्गपारगैः ॥ ६२ ॥
नानानियमविख्यातैर्ऋषिभिः सुमहात्मभिः।
प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ॥ ६३ ॥
तेजसा तपसा चैव दीप्यमानं यथानलम्।
शिष्यैरनुगतं शान्तं युवानं ब्राह्मणर्षभम् ॥ ६४ ॥
शिरसा वन्दमानं मामुपमन्युरभाषत ॥ ६५ ॥
स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः।
यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि ॥ ६६ ॥
तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु।
धर्मे च शिष्यवर्गे च समपृच्छमनामयम् ॥ ६७ ॥
ततो मां भगवानाह साम्ना परमवल्गुना।
लप्स्यसे तनयं कृष्ण आत्मतुल्यमसंशयम् ॥ ६८ ॥
तपः सुमहदास्थाय तोषयेशानमीश्वरम्।
इह देवः सपत्नीकः समाक्रीडत्यधोक्षज ॥ ६९ ॥
इहैनं दैवतश्रेष्ठं देवाः सर्षिगणाः पुरा।
तपसा ब्रह्मचर्येण सत्येन च दमेन च ॥ ७० ॥
तोषयित्वा शुभान् कामान् प्राप्तवन्तो जनार्दन।
तेजसां तपसां चैव निधिः स भगवानिह ॥ ७१½ ॥
शुभाशुभान्वितान् भावान् विसृजन् संक्षिपन्नपि।
आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् ॥ ७२ ॥
हिरण्यकशिपुर्योऽभूद् दानवो मेरुकम्पनः।
तेन सर्वामरैश्वर्यं शर्वात् प्राप्तं समार्बुदम् ॥ ७३ ॥
तस्यैव पुत्रप्रवरो मन्दारो नाम विश्रुतः।
महादेववराच्छक्रं वर्षार्बुदमयोधयत् ॥ ७४ ॥
विष्णोश्चक्रं च तद् घोरं वज्रमाखण्डलस्य च।
शीर्णं पुराभवत् तात ग्रहस्याङ्गेषु केशव ॥ ७५ ॥
यत् तद् भगवता पूर्वं दत्तं चक्रं तवानघ।
जलान्तरचरं हत्वा दैत्यं च बलगर्वितम् ॥ ७६ ॥
उत्पादितं वृषाङ्केन दीप्तज्वलनसंनिभम्।
दत्तं भगवता तुभ्यं दुर्धर्षं तेजसाद्भुतम् ॥ ७७ ॥
न शक्यं द्रष्टुमन्येन वर्जयित्वा पिनाकिनम्।
सुदर्शनं भवत्येवं भवेनोक्तं तदा तु तत् ॥ ७८ ॥
सुदर्शनं तदा तस्य लोके नाम प्रतिष्ठितम्।
तज्जीर्णमभवत् तात ग्रहस्याङ्गेषु केशव ॥ ७९ ॥
ग्रहस्यातिबलस्याङ्गे वरदत्तस्य धीमतः।
न शस्त्राणि वहन्त्यङ्गे चक्रवज्रशतान्यपि ॥ ८० ॥
अर्द्यमानाश्च विबुधा ग्रहेण सुबलीयसा।
शिवदत्तवरान् जघ्नुरसुरेन्द्रान् सुरा भृशम् ॥ ८१ ॥
तुष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतां ददौ।
शतं वर्षसहस्राणां सर्वलोकेश्वरोऽभवत् ॥ ८२ ॥
ममैवानुचरो नित्यं भवितासीति चाब्रवीत्।
तथा पुत्रसहस्राणामयुतं च ददौ प्रभुः ॥ ८३ ॥
कुशद्वीपं च स ददौ राज्येन भगवानजः।
तथा शतमुखो नाम धात्रा सृष्टो महासुरः ॥ ८४ ॥
येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः।
तं प्राह भगवांस्तुष्टः किं करोमीति शंकरः ॥ ८५ ॥
तं वै शतमुखः प्राह योगो भवतु मेऽद्भुतः।
बलं च दैवतश्रेष्ठ शाश्वतं सम्प्रयच्छ मे ॥८६॥
तथेति भगवानाह तस्य तद् वचनं प्रभुः।
स्वायम्भुवः क्रतुश्चापि पुत्रार्थमभवत् पुरा ॥ ८७ ॥
आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि।
तस्य चोपददौ पुत्रान् सहस्रं क्रतुसम्मितान्॥ ८८ ॥
योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः।
याज्ञवल्क्य इति ख्यात ऋषिः परमधार्मिकः ॥ ८९ ॥
आराध्य स महादेवं प्राप्तवानतुलं यशः।
वेदव्यासश्च योगात्मा पराशरसुतो मुनिः ॥ ९० ॥
सोऽपि शङ्करमाराध्य प्राप्तवानतुलं यशः।
वालखिल्या मघवता ह्यवज्ञाताः पुरा किल ॥ ९१ ॥
तैः क्रुद्धैर्भगवान् रुद्रस्तपसा तोषितो ह्यभूत्।
तांश्चापि दैवतश्रेष्ठः प्राह प्रीतो जगत्पतिः ॥ ९२ ॥
सुपर्णं सोमहर्तारं तपसोत्पादयिष्यथ।
महादेवस्य रोषाच्च आपो नष्टाः पुराभवन् ॥ ९३ ॥
ताश्च सप्तकपालेन देवैरन्याः प्रवर्तिताः।
ततः पानीयमभवत् प्रसन्ने त्र्यम्बके भुवि ॥ ९४ ॥

अत्रेर्भार्यापि भर्तारं संत्यज्य ब्रह्मवादिनी।
नाहं तस्य मुनेर्भूयो वशगा स्यां कथंचन ॥ ९५ ॥
इत्युक्त्वा सा महादेवमगच्छच्छरणं किल।
निराहारा भयादत्रेस्त्रीणि वर्षशतान्यपि ॥ ९६ ॥
अशेत मुसलेष्वेव प्रसादार्थं भवस्य सा।
तामब्रवीद्धसन् देवो भविता वै सुतस्तव ॥ ९७ ॥
विना भर्त्रा च रुद्रेण भविष्यति न संशयः।
वंशे तथैव नाम्ना तु ख्यातिं यास्यति चेप्सिताम् ॥९८॥
विकर्णश्च महादेवं तथा भक्तसुखावहम्।
प्रसाद्य भगवान् सिद्धिं प्राप्तवान् मधुसूदन ॥ ९९ ॥
शाकल्यः संशितात्मा वै नववर्षशतान्यपि।
आराधयामास भवं मनोयज्ञेन केशव ॥१००॥
तं चाह भगवांस्तुष्टो ग्रन्थकारो भविष्यसि।
वत्साक्षया च ते कीर्तिस्त्रैलोक्ये वै भविष्यति ॥१०१॥
अक्षयं च कुलं तेऽस्तु महर्षिभिरलंकृतम्।
भविष्यति द्विजश्रेष्ठः सूत्रकर्ता सुतस्तव ॥१०२॥
सावर्णिश्चापि विख्यात ऋषिरासीत् कृते युगे।
इह तेन तपस्तप्तं षष्टिवर्षशतान्यथ ॥१०३॥
तमाह भगवान् रुद्रः साक्षात् तुष्टोऽस्मि तेऽनघ।
ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः ॥१०४॥
शक्रेण तु पुरा देवो वाराणस्यां जनार्दन।
आराधितोऽभूद् भक्तेन दिग्वासा भस्मगुण्ठितः ॥१०५॥
आराध्य स महादेवं देवराजमवाप्तवान्।
नारदेन तु भक्त्यासौ भव आराधितः पुरा ॥१०६॥
तस्य तुष्टो महादेवो जगौ देवगुरुर्गुरुः।
तेजसा तपसा कीर्त्या त्वत्समो न भविष्यति ॥१०७॥
गीतेन वादितव्येन नित्यं मामनुयास्यसि।
मयापि च यथा दृष्टो देवदेवः पुरा विभो ॥१०८॥
साक्षात् पशुपतिस्तात तच्चापि शृणु माधव।
यदर्थं च मया देवः प्रयतेन तथा विभो ॥१०९॥
प्रबोधितो महातेजास्तं चापि शृणु विस्तरम्।
यदवाप्तं च मे पूर्वं देवदेवान्महेश्वरात् ॥११०॥
तत् सर्वं निखिलेनाद्य कथयिष्यामि तेऽनघ।
पुरा कृतयुगे तात ऋषिरासीन्महायशाः ॥१११॥
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः।
तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः ॥११२॥
कस्यचित् त्वथ कालस्य धौम्येन सह माधव।
आगच्छमाश्रमं क्रीडन् मुनीनां भावितात्मनाम् ॥११३॥
तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी।
लक्षितं च मया क्षीरं स्वादुतो ह्यमृतोपमम् ॥११४॥
ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तथा।
क्षीरोदनसमायुक्तं भोजनं हि प्रयच्छ मे ॥११५॥
अभावाच्चैव दुग्धस्य दुःखिता जननी तदा।
ततः पिष्टं समालोड्य तोयेन सह माधव ॥११६॥
आवयोः क्षीरमित्येव पानार्थं समुपानयत्।
अथ गव्यं पयस्तात कदाचित् प्राशितं मया ॥११७॥
पित्राहं यज्ञकाले हि नीतो ज्ञातिकुलं महत्।
तत्र सा क्षरते देवी दिव्या गौः सुरनन्दिनी ॥११८॥
तस्याहं तत् पयः पीत्वा रसेन ह्यमृतोपमम्।
ज्ञात्वा क्षीरगुणांश्चैव उपलभ्य हि सम्भवम् ॥११९॥
स च पिष्टरसस्तात न मे प्रीतिमुपावहत्।
ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तदा ॥१२०॥
नेदं क्षीरोदनं मातर्यत् त्वं मे दत्तवत्यसि।
ततो मामब्रवीन्माता दुःखशोकसमन्विता ॥१२१॥
पुत्रस्नेहात् परिष्वज्य मूर्ध्नि चाघ्राय माधव।
कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनाम् ॥१२२॥
वने निवसतां नित्यं कन्दमूलफलाशिनाम्।
आस्थितानां नदीं दिव्यां वालखिल्यैर्निषेविताम् ॥१२३॥
कुतः क्षीरं वनस्थानां मुनीनां गिरिवासिनाम्।
पावनानां वनाशानां वनाश्रमनिवासिनाम् ॥१२४॥
ग्राम्याहारनिवृत्तानामारण्यफलभोजिनाम्।
नास्ति पुत्र पयोऽरण्ये सुरभीगोत्रवर्जिते ॥१२५॥
नदीगह्वरशैलेषु तीर्थेषु विविधेषु च।
तपसा जप्यनित्यानां शिवो नः परमा गतिः ॥१२६॥
अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम्।
कुतः क्षीरोदनं वत्स सुखानि वसनानि च ॥१२७॥
तं प्रपद्य सदा वत्स सर्वभावेन शङ्करम्।
तत्प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक ॥१२८॥
जनन्यास्तद् वचः श्रुत्वा तदाप्रभृति शत्रुहन्।
प्राञ्जलिः प्रणतो भूत्वा इदमम्बामचोदयम् ॥१२९॥
कोऽयमम्ब महादेवः स कथं च प्रसीदति।
कुत्र वा वसते देवो द्रष्टव्यो वा कथंचन ॥१३०॥
तुष्यते वा कथं शर्वो रूपं तस्य च कीदृशम्।
कथं ज्ञेयः प्रसन्नो वा दर्शयेज्जननि मम ॥१३१॥
एवमुक्ता तदा कृष्ण माता मे सुतवत्सला।
मूर्धन्याघ्राय गोविन्द सबाष्पाकुललोचना ॥१३२॥
प्रमार्जन्ती च गात्राणि मम वै मधुसूदन।
दैन्यमालम्ब्य जननी इदमाह सुरोत्तम ॥१३३॥

*अम्बोवाच*

दुर्विज्ञेयो महादेवो दुराधारो दुरन्तकः।
दुराबाधश्च दुर्ग्राह्यो दुर्दृश्यो ह्यकृतात्मभिः ॥१३४॥
यस्य रूपाण्यनेकानि प्रवदन्ति मनीषिणः।
स्थानानि च विचित्राणि प्रसादाश्चाप्यनेकशः ॥१३५॥
को हि तत्त्वेन तद् वेद ईशस्य चरितं शुभम्।
कृतवान् यानि रूपाणि देवदेवः पुरा किल।
क्रीडते च तथा शर्वः प्रसीदति यथा च वै ॥१३६॥

हृदिस्थः सर्वभूतानां विश्वरूपो महेश्वरः।
भक्तानामनुकम्पार्थं दर्शनं च यथाश्रुतम् ॥१३७॥
मुनीनां ब्रुवतां दिव्यमीशानचरितं शुभम्।
कृतवान् यानि रूपाणि कथितानि दिवौकसैः ॥१३८॥
अनुग्रहार्थं विप्राणां शृणु वत्स समासतः।
तानि ते कीर्तयिष्यामि यन्मां त्वं परिपृच्छसि॥१३९॥

*अम्बोवाच*

ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि।
विश्वेषामपि देवानां वपुर्धारयते भवः ॥१४०॥
नराणां देवनारीणां तथा प्रेतपिशाचयोः।
किरातशबराणां च जलजानामनेकशः ॥१४१॥
करोति भगवान् रूपमाटव्यशबराण्यपि।
कूर्मो मत्स्यस्तथा शङ्खः प्रवालाङ्कुरभूषणः ॥१४२॥
यक्षराक्षससर्पाणां दैत्यदानवयोरपि।
वपुर्धारयते देवो भूयश्च बिलवासिनाम् ॥१४३॥
व्याघ्रसिंहमृगाणां च तरक्ष्वृक्षपतत्रिणाम्।
उलूकश्वशृगालानां रूपाणि कुरुतेऽपि च ॥१४४॥
हंसकाकमयूराणां कृकलासकसारसाम्।
रूपाणि च बलाकानां गृध्रचक्राङ्गयोरपि ॥१४५॥
करोति वा स रूपाणि धारयत्यपि पर्वतम्।
गोरूपं च महादेवो हस्त्यश्वोष्ट्रखराकृतिः ॥१४६॥
छागशार्दूलरूपश्च अनेकमृगरूपधृक्।
अण्डजानां च दिव्यानां वपुर्धारयते भवः ॥१४७॥
दण्डी छत्री च कुण्डी च द्विजानां धारणस्तथा।
षण्मुखो वै बहुमुखस्त्रिनेत्रो बहुशीर्षकः ॥१४८॥
अनेककटिपादश्च अनेकोदरवक्त्रधृक्।
अनेकपाणिपार्श्वश्च अनेकगणसंवृतः ॥१४९॥
ऋषिगन्धर्वरूपश्च सिद्धचारणरूपधृक्।
भस्मपाण्डुरगात्रश्च चन्द्रार्धकृतभूषणः ॥१५०॥
अनेकरावसंघुष्टश्चानेकस्तुतिसंस्कृतः।
सर्वभूतान्तकः सर्वः सर्वलोकप्रतिष्ठितः ॥१५१॥
सर्वलोकान्तरात्मा च सर्वगः सर्ववाद्यपि।
सर्वत्र भगवान् ज्ञेयो हृदिस्थः सर्वदेहिनाम् ॥१५२॥
यो हि यं कामयेत् कामं यस्मिन्नर्थेऽर्च्यते पुनः।
तत् सर्वं वेत्ति देवेशस्तं प्रपद्य यदीच्छसि ॥१५३॥
नन्दते कुप्यते चापि तथा हुंकारयत्यपि।
चक्री शूली गदापाणिर्मुसली खड्गपट्टिशी ॥१५४॥
भूधरो नागमौञ्जी च नागकुण्डलकुण्डली।
नागयज्ञोपवीती च नागचर्मोत्तरच्छदः ॥१५५॥
हसते गायते चैव नृत्यते च मनोहरम्।
वादयत्यपि वाद्यानि विचित्राणि गणैर्युतः ॥१५६॥
वल्गते जृम्भते चैव रुदते रोदयत्यपि।
उन्मत्तमत्तरूपं च भाषते चापि सुस्वरः ॥१५७॥
अतीव हसते रौद्रस्त्रासयन् नयनैर्जनम्।
जागर्ति चैव स्वपिति जृम्भते च यथासुखम् ॥१५८॥
जपते जप्यते चैव तपते तप्यते पुनः।
ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च ॥१५९॥
वेदीमध्ये तथा यूपे गोष्ठमध्ये हुताशने।
दृश्यते दृश्यते चापि बालो वृद्धो युवा तथा ॥१६०॥
क्रीडते ऋषिकन्याभिर्ऋषिपत्नीभिरेव च।
ऊर्ध्वकेशो महाशेफो नग्नो विकृतलोचनः ॥१६१॥
गौरः श्यामस्तथा कृष्णः पाण्डुरो धूमलोहितः।
विकृताक्षो विशालाक्षो दिग्वासाः सर्ववासकः॥१६२॥
अरूपस्याद्यरूपस्य अतिरूपाद्यरूपिणः।
अनाद्यन्तमजस्यान्तं वेत्स्यते कोऽस्य तत्त्वतः॥१६३॥
हृदि प्राणो मनो जीवो योगात्मा योगसंज्ञितः।
ध्यानं तत्परमात्मा च भावग्राह्यो महेश्वरः ॥१६४॥
वादको गायनश्चैव सहस्रशतलोचनः।
एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रोऽनेकवक्त्रकः॥१६५॥
तद्भक्तस्तद्गतो नित्यं तन्निष्ठस्तत्परायणः।
भज पुत्र महादेवं ततः प्राप्स्यसि चेप्सितम् ॥१६६॥
जनन्यास्तद् वचः श्रुत्वा तदाप्रभृति शत्रुहन्।
मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ॥१६७॥
ततोऽहं तप आस्थाय तोषयामास शङ्करम्।
एकं वर्षसहस्रं तु वामाङ्गुष्ठाग्रविष्ठितः ॥१६८॥
एकं वर्षशतं चैव फलाहारस्ततोऽभवम्।
द्वितीयं शीर्णपर्णाशी तृतीयं चाम्बुभोजनः ॥१६९॥
शतानि सप्त चैवाहं वायुभक्षस्तदाभवम्।
एकं वर्षसहस्रं तु दिव्यमाराधितो मया ॥१७०॥
ततस्तुष्टो महादेवः सर्वलोकेश्वरः प्रभुः।
एकभक्त इति ज्ञात्वा जिज्ञासां कुरुते तदा ॥१७१॥
शक्ररूपं स कृत्वा तु सर्वैर्देवगणैर्वृतः।
सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः ॥१७२॥
सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम्।
आवेष्टितकरं घोरं चतुर्दंष्ट्रं महागजम् ॥१७३॥
समास्थितः स भगवान् दीप्यमानः स्वतेजसा।
आजगाम किरीटी तु हारकेयूरभूषितः ॥१७४॥
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि।
सेव्यमानोऽप्सरोभिश्च दिव्यगन्धर्वनादितैः ॥१७५॥
ततो मामाह देवेन्द्रस्तुष्टस्तेऽहं द्विजोत्तम।
वरं वृणीष्व मत्तस्त्वं यत् ते मनसि वर्तते ॥१७६॥
शक्रस्य तु वचः श्रुत्वा नाहं प्रीतमनाभवम्।
अब्रुवं च तदा हृष्टो देवराजमिदं वचः ॥१७७॥
नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात्।
महादेवादृते सौम्य सत्यमेतद् ब्रवीमि ते ॥१७८॥

सत्यं सत्यं हि नः शक्र वाक्यमेतत् सुनिश्चितम्।
न यन्महेश्वरं मुक्त्वा कथान्या मम रोचते ॥१७९॥

पशुपतिवचनाद् भवामि सद्यः
कृमिरथवा तरुरप्यनेकशाखः।
अपशुपतिवरप्रसादजा मे
त्रिभुवनराज्यविभूतिरप्यनिष्टा ॥१८०॥

जन्म श्वपाकमध्येऽपि
मेऽस्तु हरचरणवन्दनरतस्य।
मा वानीश्वरभक्तो
भवानि भवनेऽपि शक्रस्य ॥१८१॥

वाय्वम्बुभुजोऽपि सतो
नरस्य दुःखक्षयः कुतस्तस्य।
भवति हि सुरासुरगुरौ
यस्य न विश्वेश्वरे भक्तिः ॥१८२॥

अलमन्याभिस्तेषां
कथाभिरप्यन्यधर्मयुक्ताभिः।
येषां न क्षणमपि रुचितो
हरचरणस्मरणविच्छेदः ॥१८३॥

हरचरणनिरतमतिना
भवितव्यमनार्जवं युगं प्राप्य।
संसारभयं न भवति
हरभक्तिरसायनं पीत्वा ॥१८४॥

दिवसं दिवसार्धं वा मुहूर्तं वा क्षणं लवम्।
न ह्यलब्धप्रसादस्य भक्तिर्भवति शङ्करे ॥१८५॥

अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया।
न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये ॥१८६॥

श्वापि महेश्वरवचनाद्
भवामि स हि नः परः कामः।
त्रिदशगणराज्यमपि खलु
नेच्छाम्यमहेश्वराज्ञसम् ॥१८७॥

न नाकपृष्ठं न च देवराज्यं
न ब्रह्मलोकं न च निष्कलत्वम्।
न सर्वकामानखिलान् वृणोमि
हरस्य दासत्वमहं वृणोमि ॥१८८॥

यावच्छशाङ्कधवलामलबद्धमौलि-
र्न प्रीयते पशुपतिर्भगवान् ममेशः।
तावज्जरामरणजन्मशताभिघातै-
र्दुःखानि देहविहितानि समुद्वहामि ॥

दिवसकरशशाङ्कवह्निदीप्तं
त्रिभुवनसारमसारमाद्यमेकम्।
अजरममरमप्रसाद्य रुद्रं
जगति पुमानिह को लभते शान्तिम् ॥१९०॥

यदि नाम जन्म भूयो
भवति मदीयैः पुनर्दोषैः।
तस्मिंस्तस्मिञ्जन्मनि
भवे भवेन्मेऽक्षया भक्तिः ॥१९१॥

*शक्र उवाच*

कः पुनर्भवने हेतुरीशे कारणकारणे।
येन शर्वादृतेऽन्यस्मात् प्रसादं नाभिकाङ्क्षसि ॥१९२॥

*उपमन्युरुवाच*

सदसद् व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः।
नित्यमेकमनेकं च वरं तस्माद् वृणीमहे ॥१९३॥
अनादिमध्यपर्यन्तं ज्ञानैश्वर्यमचिन्तितम्।
आत्मानं परमं यस्माद् वरं तस्माद् वृणीमहे ॥१९४॥
ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययम्।
अबीजाद् बीजसम्भूतं वरं तस्माद् वृणीमहे ॥१९५॥
तमसः परमं ज्योतिस्तपस्तद्वृत्तिनां परम्।
यं ज्ञात्वा नानुशोचन्ति वरं तस्माद् वृणीमहे ॥१९६॥
भूतभावनभावज्ञं सर्वभूताभिभावनम्।
सर्वगं सर्वदं देवं पूजयामि पुरन्दर ॥ १९७॥
हेतुवादैर्विनिर्मुक्तं सांख्ययोगार्थदं परम्।
यमुपासन्ति तत्त्वज्ञा वरं तस्माद् वृणीमहे ॥१९८॥
मघवन् मघवात्मानं यं वदन्ति सुरेश्वरम्।
सर्वभूतगुरुं देवं वरं तस्माद् वृणीमहे ॥१९९॥
यः पूर्वमसृजद् देवं ब्रह्माणं लोकभावनम्।
अण्डमाकाशमापूर्य वरं तस्माद् वृणीमहे ॥२००॥
अग्निरापोऽनिलः पृथ्वी खं बुद्धिश्च मनो महान्।
स्रष्टा चैषां भवेद् योऽन्यो ब्रूहि कः परमेश्वरात् ॥२०१॥
मनो मतिरहंकारस्तन्मात्राणीन्द्रियाणि च।
ब्रूहि चैषां भवेच्छक्र कोऽन्योऽस्ति परमं शिवात् ॥२०२॥
स्रष्टारं भुवनस्येह वदन्तीह पितामहम्।
आराध्य स तु देवेशमश्नुते महतीं श्रियम् ॥२०३॥
भगवत्युत्तमैश्वर्यं ब्रह्मविष्णुपुरोगमम्।
विद्यते वै महादेवाद् ब्रूहि कः परमेश्वरात् ॥२०४॥
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनात्।
कोऽन्यः शक्नोति देवेशाद् दितेः सम्पादितुं सुतान् ॥
दिक्कालसूर्यतेजांसि ग्रहवाय्विन्दुतारकाः।
विद्धि त्वेते महादेवाद् ब्रूहि कः परमेश्वरात् ॥२०६॥
अथोत्पत्तिविनाशे वा यज्ञस्य त्रिपुरस्य वा।
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनः ॥२०७॥
किं चात्र बहुभिः सूक्तैर्हेतुवादैः पुरंदर।
सहस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ॥२०८॥
पूजितं सिद्धगन्धर्वैर्देवैश्च ऋषिभिस्तथा।
देवदेवप्रसादेन तत् सर्वं कुशिकोत्तम ॥२०९॥

अव्यक्तमुक्तकेशाय सर्वगस्येदमात्मकम् ।
चेतनाचेतनाद्येषु शक्र विद्धि महेश्वरात् ॥२१०॥
भुवाद्येषु महान्तेषु लोकालोकान्तरेषु च ।
द्वीपस्थानेषु मेरोश्च विभवेष्वन्तरेषु च ॥२११॥
भगवन् मघवन् देवं वदन्ते तत्त्वदर्शिनः ।
यदि देवाः सुराः शक्र पश्यन्त्यन्यां भवाद् गतिम् ॥२१२॥
किं न गच्छन्ति शरणं मर्दिताश्चासुरैः सुराः ।
अभिघातेषु देवानां सयक्षोरगरक्षसाम् ॥२१३॥
परस्परविनाशेषु स्वस्थानैश्वर्यदो भवः ।
अन्धकस्याथ शुक्रस्य दुन्दुभेर्महिषस्य च ॥२१४॥
यक्षेन्द्रवलरक्षःसु निवातकवचेषु च ।
वरदानावघाताय ब्रूहि कोऽन्यो महेश्वरात् ॥२१५॥
सुरासुरगुरोर्वक्त्रे कस्य रेतः पुरा हुतम् ।
कस्य वान्यस्य रेतस्तद् येन हैमो गिरिः कृतः ॥२१६॥
दिग्वासाः कीर्त्यते कोऽन्यो लोके कश्चोर्ध्वरेतसः ।
कस्य चार्धे स्थिता कान्ता अनङ्गः केन निर्जितः ॥२१७॥
ब्रूहीन्द्र परमं स्थानं कस्य देवैः प्रशस्यते ।
श्मशाने कस्य क्रीडार्थं नृत्ते वा कोऽभिभाष्यते ॥२१८॥
कस्यैश्वर्यं समानं च भूतैः को वापि क्रीडते ।
कस्य तुल्यबला देव गणाश्चैश्वर्यदर्पिताः ॥२१९॥
घुष्यते ह्यचलं स्थानं कस्य त्रैलोक्यपूजितम् ।
वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः ॥२२०॥
कस्मादोषधिसम्पत्तिः को वा धारयते वसु ।
प्रकामं क्रीडते को वा त्रैलोक्ये सचराचरे ॥२२१॥
ज्ञानसिद्धिक्रियायोगैः सेव्यमानश्च योगिभिः ।
ऋषिगन्धर्वसिद्धैश्च विहितं कारणं परम् ॥२२२॥
कर्मयज्ञक्रियायोगैः सेव्यमानः सुरासुरैः ।
नित्यं कर्मफलैर्हीनं तमहं कारणं वदे ॥२२३॥
स्थूलं सूक्ष्ममनौपम्यमग्राह्यं गुणगोचरम् ।
गुणहीनं गुणाध्यक्षं परं माहेश्वरं पदम् ॥२२४॥
विश्वेशं कारणगुरुं लोकालोकान्तकारणम् ।
भूताभूतभविष्यच्च जनकं सर्वकारणम् ॥२२५॥
अक्षराक्षरमव्यक्तं विद्याविद्ये कृताकृते ।
धर्माधर्मौ यतः शक्र तमहं कारणं ब्रुवे ॥२२६॥
प्रत्यक्षमिह देवेन्द्र पश्य लिङ्गं भगाङ्कितम् ।
देवदेवेन रुद्रेण सृष्टिसंहारहेतुना ॥२२७॥
मात्रा पूर्वं ममाख्यातं कारणं लोकलक्षणम् ।
नास्ति चेशात् परं शक्र तं प्रपद्य यदीच्छसि ॥२२८॥
प्रत्यक्षं ननु ते सुरेश विदितं संयोगलिङ्गोद्भवं
त्रैलोक्यं सविकारनिर्गुण गणं ब्रह्मादिरेतोद्भवम् ।
यद्ब्रह्मेन्द्रहुताशविष्णुसहिता देवाश्च दैत्येश्वरा
नान्यत् कामसहस्रकल्पितधियः शंसन्ति ईशात् परम् ।
तं देवं सचराचरस्य जगतो व्याख्यातवेद्योत्तमं
कामार्थी वरयामि संयतमना मोक्षाय सद्यः शिवम् ॥२२९॥
हेतुभिर्वा किमन्यैस्तैरीशः कारणकारणम् ।
न शुश्रुम यदन्यस्य लिङ्गमभ्यर्चितं सुरैः ॥२३०॥
कस्यान्यस्य सुरैः सर्वैर्लिङ्गं मुक्त्वा महेश्वरम् ।
अर्च्यतेऽर्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतिः ॥२३१॥
यस्य ब्रह्मा च विष्णुश्च त्वं चापि सह दैवतैः ।
अर्चयध्वं सदा लिङ्गं तस्माच्छ्रेष्ठतमो हि सः ॥२३२॥
न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजाः ।
लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा ॥२३३॥

देव्याः कारणरूपभावजनिताः
सर्वा भगाङ्काः स्त्रियो
लिंगेनापि हरस्य सर्वपुरुषाः
प्रत्यक्षचिह्नीकृताः ।
योऽन्यत्कारणमीश्वरात् प्रवदते
देव्या च यन्नाङ्कितं
त्रैलोक्ये सचराचरे स तु पुमान्
बाह्यो भवेद् दुर्मतिः ॥२३४॥

पुंलिङ्गं सर्वमीशानं स्त्रीलिङ्गं विद्धि चाप्युमाम् ।
द्वाभ्यां तनुभ्यां व्याप्तं हि चराचरमिदं जगत् ॥२३५॥

( दिवसकरशशाङ्कवह्निनेत्रं
त्रिभुवनसारमपारमीशमाद्यम् ।
अजरममरमप्रसाद्य रुद्रं
जगति पुमानिह को लभेत शान्तिम् ॥ )

तस्माद् वरमहं काङ्क्षे निधनं वापि कौशिक ।
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ॥२३६॥
काममेष वरो मेऽस्तु शापो वाथ महेश्वरात् ।
न चान्यां देवतां काङ्क्षे सर्वकामफलामपि ॥२३७॥
एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः ।
न प्रसीदति मे देवः किमेतदिति चिन्तयन् ॥२३८॥
अथापश्यं क्षणेनैव तमेवैरावतं पुनः ।
हंसकुन्देन्दुसदृशं मृणालरजतप्रभम् ॥२३९॥
वृषरूपधरं साक्षात् क्षीरोदमिव सागरम् ।
कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ॥२४०॥
वज्रसारमयैः शृङ्गैर्निष्टप्तकनकप्रभैः ।
सुतीक्ष्णैर्मृदुरक्ताग्रैरुत्किरन्तमिवावनिम् ॥२४१॥
जाम्बूनदेन दाम्ना च सर्वतः समलंकृतम् ।
सुवक्त्रखुरनासं च सुकर्णं सुकटीतटम् ॥२४२॥
सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् ।
ककुदं तस्य चाभाति स्कन्धमापूर्य धिष्ठितम् ॥२४३॥
तुषारगिरिकूटाभं सिताभ्रशिखरोपमम् ।
तमास्थितश्च भगवान् देवदेवः सहोमया ॥२४४॥
अशोभत महादेवः पौर्णमास्यामिवोडुराट् ।
तस्य तेजोभवो वह्निः समेघः स्तनयित्नुमान् ॥२४५॥

सहस्रमिव सूर्याणां सर्वमापूर्य धिष्ठितः ।
ईश्वरः सुमहातेजाः संवर्तक इवानलः ॥२४६॥
युगान्ते सर्वभूतानां दिधक्षुरिव चोद्यतः ।
तेजसा तु तदा व्याप्तं दुर्निरीक्ष्यं समन्ततः ॥२४७॥
पुनरुद्विग्नहृदयः किमेतदिति चिन्तयम् ।
मुहूर्तमिव तत् तेजो व्याप्य सर्वा दिशो दश ॥२४८॥
प्रशान्तं दिक्षु सर्वासु देवदेवस्य मायया ।
अथापश्यं स्थितं स्थाणुं भगवन्तं महेश्वरम् ॥२४९॥
नीलकण्ठं महात्मानमसक्तं तेजसां निधिम् ।
अष्टादशभुजं स्थाणुं सर्वाभरणभूषितम् ॥२५०॥
शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ॥२५१॥
गायद्भिर्नृत्यमानैश्च वादयद्भिश्च सर्वशः ।
वृतं पार्श्वचरैर्दिव्यैरात्मतुल्यपराक्रमैः ॥२५२॥
बालेन्दुमुकुटं पाण्डुं शरच्चन्द्रमिवोदितम् ।
त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिः सूर्यैरिवोदितैः ॥२५३॥
( सर्वविद्याधिपं देवं शरच्चन्द्रसमप्रभम् ।
नयनाह्लादसौभाग्यमपश्यं परमेश्वरम् ॥ )
अशोभतास्य देवस्य माला गात्रे सितप्रभे ।
जातरूपमयैः पद्मैर्ग्रथिता रत्नभूषिता ॥२५४॥
मूर्तिमन्ति तथास्त्राणि सर्वतेजोमयानि च ।
मया दृष्टानि गोविन्द भवस्यामिततेजसः ॥२५५॥
इन्द्रायुधसवर्णाभं धनुस्तस्य महात्मनः ।
पिनाकमिति विख्यातमभवत् पन्नगो महान् ॥२५६॥
सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्बणः ।
ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः ॥२५७॥
शरश्च सूर्यसंकाशः कालानलसमद्युतिः ।
एतदस्त्रं महाघोरं दिव्यं पाशुपतं महत् ॥२५८॥
अद्वितीयमनिर्देश्यं सर्वभूतभयावहम् ।
सस्फुलिङ्गं महाकायं विसृजन्तमिवानलम् ॥२५९॥
एकपादं महादंष्ट्रं सहस्रशिरसोदरम् ।
सहस्रभुजजिह्वाक्षमुद्गिरन्तमिवानलम् ॥२६०॥
ब्राह्मान्नारायणाच्चैन्द्रादाग्नेयादपि वारुणात् ।
यद् विशिष्टं महाबाहो सर्वशस्त्रविघातनम् ॥२६१॥
येन तत् त्रिपुरं दग्ध्वा क्षणाद् भस्मीकृतं पुरा ।
शरेणैकेन गोविन्द महादेवेन लीलया ॥२६२॥
निर्ददाह च यत् कृत्स्नं त्रैलोक्यं सचराचरम् ।
महेश्वरभुजोत्सृष्टं निमेषार्धान्न संशयः ॥२६३॥
नावध्यो यस्य लोकेऽस्मिन् ब्रह्मविष्णुसुरेष्वपि ।
तदहं दृष्टवांस्तत्र आश्चर्यमिदमुत्तमम् ॥२६४॥
गुह्यमस्त्रवरं नान्यत् तत्तुल्यमधिकं हि वा ।
यत् तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः ॥२६५॥
दारयेद् यां महीं कृत्स्नां शोषयेद् वा महोदधिम् ।
संहरेद् वा जगत् कृत्स्नं विसृष्टं शूलपाणिना ॥२६६॥
यौवनाश्वो हतो येन मान्धाता सबलः पुरा ।
चक्रवर्ती महातेजास्त्रिलोकविजयी नृपः ॥२६७॥
महाबलो महावीर्यः शक्रतुल्यपराक्रमः ।
करस्थेनैव गोविन्द लवणस्येह रक्षसः ॥२६८
तच्छूलमतितीक्ष्णाग्रं सुभीमं लोमहर्षणम् ।
त्रिशिखां भ्रुकुटिं कृत्वा तर्जमानमिव स्थितम् ॥२६९॥
विधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम् ।
सर्पहस्तमनिर्देश्यं पाशहस्तमिवान्तकम् ॥२७०॥
दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसंनिधौ ।
परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुरा ॥२७१॥
महादेवेन तुष्टेन क्षत्रियाणां क्षयंकरः ।
कार्तवीर्यो हतो येन चक्रवर्ती महामृधे ॥२७२॥
त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता ।
जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्मणा ॥२७३॥
दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रधिष्ठितः ।
अभवच्छूलिनोऽभ्याशे दीप्तवह्निशतोपमः ॥२७४॥
असंख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः ।
प्राधान्यतो मयैतानि कीर्तितानि तवानघ ॥२७५॥
सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः ।
दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ॥२७६॥
वामपार्श्वगतश्चापि तथा नारायणः स्थितः ।
वैनतेयं समारुह्य शङ्खचक्रगदाधरः ॥२७७॥
स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः ।
शक्तिघण्टे समादाय द्वितीय इव पावकः ॥२७८॥
पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम् ।
शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शङ्करम् ॥२७९॥
स्वायम्भुवाद्या मनवो भृग्वाद्या ऋषयस्तथा ।
शक्राद्या देवताश्चैव सर्व एव समभ्ययुः ॥२८०॥
सर्वभूतगणाश्चैव मातरो विविधाः स्थिताः ।
तेऽभिवाद्य महात्मानं परिवार्य समन्ततः ॥२८१॥
अस्तुवन् विविधैः स्तोत्रैर्महादेवं सुरास्तदा ।
ब्रह्मा भवं तदास्तौषीद् रथन्तरमुदीरयन् ॥२८२॥
ज्येष्ठसाम्ना च देवेशं जगौ नारायणस्तदा ॥२८३॥
गृणन् ब्रह्म परं शक्रः शतरुद्रियमुत्तमम् ।
ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः ॥२८४॥
अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः ।
तेषां मध्यगतो देवो रराज भगवाञ्छिवः ॥२८५॥
शरदभ्रविनिर्मुक्तः परिधिस्थ इवांशुमान् ।
अयुतानि च चन्द्रार्कानपश्यं दिवि केशव ॥२८६॥

भीष्म उवाच

यथा श्राद्धं सम्प्रवृत्तं यस्मिन् काले यदात्मकम् ।
येन संकल्पितं चैव तन्मे शृणु जनाधिप ॥ ३ ॥
स्वायम्भुवोऽत्रिः कौरव्य परमर्षिः प्रतापवान् ।
तस्य वंशे महाराज दत्तात्रेय इति स्मृतः ॥ ४ ॥
दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः ।
निमेश्चाप्यभवत् पुत्रः श्रीमान्नाम श्रिया वृतः ॥ ५ ॥
पूर्णे वर्षसहस्रान्ते स कृत्वा दुष्करं तपः ।
कालधर्मपरीतात्मा निधनं समुपागतः ॥ ६ ॥
निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्मणा ।
संतापमगमत् तीव्रं पुत्रशोकपरायणः ॥ ७ ॥
अथ कृत्वोपहार्याणि चतुर्दश्यां महामतिः ।
तमेव गणयञ्छोकं विरात्रे प्रत्यबुध्यत ॥ ८ ॥
तस्यासीत् प्रतिबुद्धस्य शोकेन व्यथितात्मनः ।
मनः संवृत्य विषये बुद्धिर्विस्तारगामिनी ॥ ९ ॥
ततः संचिन्तयामास श्राद्धकल्पं समाहितः ।
यानि तस्यैव भोज्यानि मूलानि च फलानि च ॥ १० ॥
उक्तानि यानि चान्नानि यानि चेष्टानि तस्य ह ।
तानि सर्वाणि मनसा विनिश्चित्य तपोधनः ॥ ११ ॥
अमावास्यां महाप्राज्ञो विप्रानानाय्य पूजितान् ।
दक्षिणावर्तिकाः सर्वा बृसीः स्वयमथाकरोत् ॥ १२ ॥
सप्त विप्रांस्ततो भोज्ये युगपत् समुपानयत् ।
ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः ॥ १३ ॥
दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः ।
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ॥ १४ ॥
कृत्वा च दक्षिणाग्रान् वै दर्भान् स प्रयतः शुचिः ।
प्रददौ श्रीमतः पिण्डान् नामगोत्रमुदाहरन् ॥ १५ ॥
तत् कृत्वा स मुनिश्रेष्ठो धर्मसंकरमात्मनः ।
पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् ॥ १६ ॥
अकृतं मुनिभिः पूर्वं किं मयेदमनुष्ठितम् ।
कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति ॥ १७ ॥
ततः संचिन्तयामास वंशकर्तारमात्मनः ।
ध्यातमात्रस्तथा चात्रिराजगाम तपोधनः ॥ १८ ॥
अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्शितम् ।
भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः ॥ १९ ॥
निमे संकल्पितस्तेऽयं पितृयज्ञस्तपोधन ।
मा ते भूद् भीः पूर्वदृष्टो धर्मोऽयं ब्रह्मणा स्वयम् ॥ २० ॥
सोऽयं स्वयम्भुविहितो धर्मः संकल्पितस्त्वया ।
ऋते स्वयम्भुवः कोऽन्यः श्राद्धेयं विधिमाहरेत् ॥ २१ ॥
अथाख्यास्यामि ते पुत्र श्राद्धेयं विधिमुत्तमम् ।
स्वयम्भुविहितं पुत्र तत् कुरुष्व निबोध मे ॥ २२ ॥
कृत्वाग्नौकरणं पूर्वं मन्त्रपूर्वं तपोधन ।
ततोऽग्नयेऽथ सोमाय वरुणाय च नित्यशः ॥ २३ ॥
विश्वेदेवाश्च ये नित्यं पितृभिः सह गोचराः ।
तेभ्यः संकल्पिता भागाः स्वयमेव स्वयम्भुवा ॥ २४ ॥
स्तोतव्या चेह पृथिवी निवापस्येह धारिणी ।
वैष्णवी काश्यपी चेति तथैवेहाक्षयेति च ॥ २५ ॥
उदकानयने चैव स्तोतव्यो वरुणो विभुः ।
ततोऽग्निश्चैव सोमश्च आप्याय्याविह तेऽनघ ॥ २६ ॥
देवास्तु पितरो नाम निर्मिता ये स्वयम्भुवा ।
उष्णपा ये महाभागास्तेषां भागः प्रकल्पितः ॥ २७ ॥
ते श्राद्धेनार्च्यमाना वै विमुच्यन्ते ह किल्बिषात् ।
सप्तकः पितृवंशस्तु पूर्वदृष्टः स्वयम्भुवा ॥ २८ ॥
विश्वे चाग्निमुखा देवाः संख्याताः पूर्वमेव ते ।
तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम् ॥ २९ ॥
बलं धृतिर्विपाप्मा च पुण्यकृत् पावनस्तथा ।
पार्ष्णिक्षेमा समूहश्च दिव्यसानुस्तथैव च ॥ ३० ॥
विवस्वान् वीर्यवान् ह्रीमान् कीर्तिमान् कृत एव च ।
जितात्मा मुनिवीर्यश्च दीप्तरोमा भयंकरः ॥ ३१ ॥
अनुकर्मा प्रतीतश्च प्रदाताप्यंशुमांस्तथा ।
शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ॥ ३२ ॥
स्रजो वज्री वरी चैव विश्वेदेवाः सनातनाः ।
विद्युद्वर्चाः सोमवर्चाः सूर्यश्रीश्चेति नामतः ॥ ३३ ॥
सोमपः सूर्यसावित्रो दत्तात्मा पुण्डरीयकः ।
उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ॥ ३४ ॥
चमूहरः सुरेशश्च व्योमारिः शङ्करो भवः ।
ईशः कर्ता कृतिर्दक्षो भुवनो दिव्यकर्मकृत् ॥ ३५ ॥
गणितः पञ्चवीर्यश्च आदित्यो रश्मिवांस्तथा ।
सप्तकृत् सोमवर्चाश्च विश्वकृत् कविरेव च ॥ ३६ ॥
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च ।
कीर्तितास्ते महाभागाः कालस्य गतिगोचराः ॥ ३७ ॥
अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।
हिंगुद्रव्येषु शाकेषु पलाण्डुं लसुनं तथा ॥ ३८ ॥
सौभाञ्जनः कोविदारस्तथा गृञ्जनकादयः ।
कूष्माण्डजात्यलाबुं च कृष्णं लवणमेव च ॥ ३९ ॥
ग्राम्यवाराहमांसं च यच्चैवाप्रोक्षितं भवेत् ।
कृष्णाजाजी विडश्चैव शीतपाकी तथैव च ।
अङ्कुराद्यास्तथा वर्ज्या इह शृङ्गाटकानि च ॥ ४० ॥
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च ।
अवक्षुतावरुदितं तथा श्राद्धे च वर्जयेत् ॥ ४१ ॥
निवापे हव्यकव्ये वा गर्हितं च सुदर्शनम् ।
पितरश्च हि देवाश्च नाभिनन्दन्ति तद्धविः ॥ ४२ ॥
चाण्डालश्वपचौ वर्ज्यौ निवापे समुपस्थिते ।
काषायवासाः कुष्ठी वा पतितो ब्रह्महापि वा ॥ ४३ ॥

संकीर्णयोनिर्विप्रश्च सम्बन्धी पतितश्च यः ।
वर्जनीया बुधैरेते निवापे समुपस्थिते ॥ ४४ ॥
इत्येवमुक्त्वा भगवान् स्ववंश्यं तमृषिं पुरा ।
पितामहसभां दिव्यां जगामात्रिस्तपोधनः ॥ ४५ ॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि श्राद्धकल्पे एकनवतितमोऽध्यायः ॥ ९१ ॥

# द्विनवतितमोऽध्यायः

श्राद्धान्नेनाजीर्णानां देवानां पितॄणां च ब्रह्मणोऽन्तिके गमनम्, अग्निनाजीर्णस्य निवारणम्, श्राद्धपरितृप्तानां पितॄणामाशीर्वचनम्

*भीष्म उवाच*

तथा निमौ प्रवृत्ते तु सर्वं एव महर्षयः ।
पितृयज्ञं तु कुर्वन्ति विधिदृष्टेन कर्मणा ॥ १ ॥
ऋषयो धर्मनित्यास्तु कृत्वा निवपनान्युत ।
तर्पणं चाप्यकुर्वन्त तीर्थाम्भोभिर्यतव्रताः ॥ २ ॥
निवापैर्दीयमानैश्च चातुर्वर्ण्येन भारत ।
तर्पिताः पितरो देवास्तत्रान्नं जरयन्ति वै ॥ ३ ॥
अजीर्णेनाभिहन्यन्ते ते देवाः पितृभिः सह ।
सोममेवाभ्यपद्यन्त तदा ह्यन्नाभिपीडिताः ॥ ४ ॥
तेऽब्रुवन् सोममासाद्य पितरोऽजीर्णपीडिताः ।
निवापान्नेन पीड्यामः श्रेयो नोऽत्र विधीयताम् ॥ ५ ॥
तान् सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः ।
स्वयम्भूसदनं यात स वः श्रेयोऽभिधास्यति ॥ ६ ॥
ते सोमवचनाद् देवाः पितृभिः सह भारत ।
मेरुशृङ्गे समासीनं पितामहमुपागमन् ॥ ७ ॥

*पितर ऊचुः*

निवापान्नेन भगवन् भृशं पीड्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ॥ ८ ॥
इति तेषां वचः श्रुत्वा स्वयम्भूरिदमब्रवीत् ।
एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयोऽभिधास्यति ॥ ९ ॥

*अग्निरुवाच*

सहितास्तात भोक्ष्यामो निवापे समुपस्थिते ।
जरयिष्यथ चाप्यन्नं मया सार्धं न संशयः ॥ १० ॥
एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वराऽभवन् ।
एतस्मात् कारणाच्चाग्नेः प्राक् तावद् दीयते नृप ॥ ११ ॥
निवप्ते चाग्निपूर्वं वै निवापे पुरुषर्षभ ।
न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत ॥ १२ ॥
रक्षांसि चापवर्तन्ते स्थिते देवे हुताशने ।
पूर्वं पिण्डं पितुर्दद्यात् ततो दद्यात् पितामहे ॥ १३ ॥
प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः ।
ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः ॥ १४ ॥
सोमायेति च वक्तव्यं तथा पितृमतेति च ।
रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या ।
निवापे नोपतिष्ठेत संग्राह्या नान्यवंशजा ॥ १५ ॥
जलं प्रतरमाणश्च कीर्तयेत पितामहान् ।
नदीमासाद्य कुर्वीत पितॄणां पिण्डतर्पणम् ॥ १६ ॥
पूर्वं स्ववंशजानां तु कृत्वाद्भिस्तर्पणं पुनः ।
सुहृत्सम्बन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् ॥ १७ ॥
कल्माषगोयुगेनाथ युक्तेन तरतो जलम् ।
पितरोऽभिलषन्ते वै नावं चाप्यधिरोहिताः ॥ १८ ॥
सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः ।
मासार्धे कृष्णपक्षस्य कुर्यान्निर्वपणानि वै ॥ १९ ॥
पुष्टिरायुस्तथा वीर्यं श्रीश्चैव पितृभक्तितः ।
पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा ॥ २० ॥
अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः ।
एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः ॥ २१ ॥
एते च पितरो राजन्नेष श्राद्धविधिः परः ।
प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्मणा ॥ २२ ॥
इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम् ।
व्याख्याता पूर्वनिर्दिष्टा दानं वक्ष्याम्यतः परम् ॥ २३ ॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि श्राद्धकल्पे द्विनवतितमोऽध्यायः ॥ ९२ ॥

# त्रिनवतितमोऽध्यायः

गृहस्थधर्माणां रहस्यम्, प्रतिग्रहदोषं वर्णयितुं वृषादर्भिः सप्तर्षीणां च कथा, भिक्षुरूपिणा शक्रेण कृत्यां निहत्य सप्तर्षीणां रक्षणम्, पद्मपुष्पस्तेयविषये शपथव्याजेन धर्मपालननिर्देशः

*युधिष्ठिर उवाच*

द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते ।
अन्नं ब्राह्मणकामाय कथमेतत् पितामह ॥ १ ॥

*भीष्म उवाच*

अवेदोक्तव्रताश्चैव भुञ्जानाः कामकारणे ।
वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ २ ॥

*युधिष्ठिर उवाच*

यदिदं तप इत्याहुरुपवासं पृथग्जनाः।
तपः स्यादेतदेवेह तपोऽन्यद् वापि किं भवेत् ॥ ३ ॥

*भीष्म उवाच*

मासार्धमासोपवासाद् यत् तपो मन्यते जनः।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ॥ ४ ॥
त्यागस्य चापि सम्पत्तिः शिष्यते तप उत्तमम्।
सदोपवासी च भवेद् ब्रह्मचारी तथैव च ॥ ५ ॥
मुनिश्च स्यात् सदा विप्रो वेदांश्चैव सदा जपेत्।
कुटुम्बिको धर्मकामः सदास्वप्नश्च मानवः ॥ ६ ॥
अमांसाशी सदा च स्यात् पवित्रं च सदा पठेत्।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ॥ ७ ॥
विघसाशी कथं च स्यात् सदा चैवातिथिप्रियः।
अमृताशी सदा च स्यात् पवित्री च सदा भवेत् ॥ ८ ॥

*युधिष्ठिर उवाच*

कथं सदोपवासी स्याद् ब्रह्मचारी च पार्थिव।
विघसाशी कथं च स्यात् कथं चैवातिथिप्रियः ॥ ९ ॥

*भीष्म उवाच*

अन्तरा सायमाशं च प्रातराशं च यो नरः।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ १० ॥
भार्यां गच्छन् ब्रह्मचारी ऋतौ भवति चैव ह।
ऋतवादी सदा च स्याद् दानशीलस्तु मानवः ॥ ११ ॥
अभक्षयन् वृथा मांसममांसाशी भवत्युत।
दानं ददत् पवित्री स्यादस्वप्नश्च दिवास्वपन् ॥ १२ ॥
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १३ ॥
अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १४ ॥
देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ १५ ॥
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः।
उपस्थिता ह्यप्सरसो गन्धर्वैश्च जनाधिप ॥ १६ ॥
देवतातिथिभिः सार्धं पितृभ्यश्चोपभुञ्जते।
रमन्ते पुत्रपौत्रेण तेषां गतिरनुत्तमा ॥ १७ ॥

*युधिष्ठिर उवाच*

ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च।
दातृप्रतिग्रहीत्रोर्वै को विशेषः पितामह ॥ १८ ॥

*भीष्म उवाच*

साधोर्यः प्रतिगृह्णीयात् तथैवासाधुतो द्विजः।
गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति ॥ १९ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
वृषादर्भेश्च संवादं सप्तर्षीणां च भारत ॥ २० ॥
कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः।
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ॥ २१ ॥
सर्वेषामथ तेषां तु गण्डाभूत् कर्मकारिका।
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ॥ २२ ॥
ते च सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम्।
समाधिनोपशिक्षन्तो ब्रह्मलोकं सनातनम् ॥ २३ ॥
अथाभवदनावृष्टिर्महती कुरुनन्दन।
कृच्छ्रप्राणोऽभवद् यत्र लोकोऽयं वै क्षुधान्वितः ॥ २४ ॥
कस्मिंश्चिच्च पुरा यज्ञे शैब्येन शिबिसूनुना।
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रः पुरा किल ॥ २५ ॥
अस्मिन् कालेऽथ सोऽल्पायुर्दिष्टान्तमगमत् प्रभुः।
ते तं क्षुधाभिसंतप्ताः परिवार्योपतस्थिरे ॥ २६ ॥

*वृषादर्भिरुवाच*

( प्रतिग्रहो ब्राह्मणानां सृष्टा वृत्तिरनिन्दिता। )
प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्यताम्।
मयि यद् विद्यते वित्तं तद् वृणुध्वं तपोधनाः ॥ २७ ॥
प्रियो हि मे ब्राह्मणो याचमानो
दद्यामहं वोऽश्वतरीसहस्रम्।
एकैकशः सवृषाः सम्प्रसूताः
सर्वेषां वै शीघ्रगाः श्वेतरोमाः ॥ २८ ॥
कुलंभराननडुहः शतं शतान्
धुर्याञ्श्वेतान् सर्वशोऽहं ददामि।
प्रष्ठौहीनां पीवराणां च ताव-
दग्र्या गृष्ट्यो धेनवः सुव्रताश्च ॥ २९ ॥
वरान् ग्रामान् व्रीहिरसं यवांश्च
रत्नं चान्यद् दुर्लभं किं ददानि।
नास्मिन्नभक्ष्ये भावमेवं कुरुध्वं
पुष्ट्यर्थं वः किं प्रयच्छाम्यहं वै ॥ ३० ॥

*ऋषय ऊचुः*

राजन् प्रतिग्रहो राज्ञो मध्वास्वादो विषोपमः।
तज्जानमानः कस्मात् त्वं कुरुषे नः प्रलोभनम् ॥ ३१ ॥
क्षेत्रं हि दैवतमिदं ब्राह्मणान् समुपाश्रितम्।
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ ३२ ॥
अह्नापहि तपो जातु ब्राह्मणस्योपजायते।
तद् दाव इव निर्दह्यात् प्राप्तो राजप्रतिग्रहः ॥ ३३ ॥
कुशलं सह दानेन राजन्नस्तु सदा तव।
अर्थिभ्यो दीयतां सर्वमित्युक्त्वान्येन ते ययुः ॥ ३४ ॥
ततः प्रचोदिता राज्ञा वनं गत्वास्य मन्त्रिणः।
प्रचीयोदुम्बराणि स्म दातुं तेषां प्रचक्रिरे ॥ ३५ ॥
उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन्।
भृत्यास्तेषां ततस्तानि प्रग्राहितुमुपाद्रवन् ॥ ३६ ॥
गुरूणीति विदित्वाथ न ग्राह्याण्यत्रिरब्रवीत्।
न स्महे मन्दविज्ञाना न स्महे मन्दबुद्धयः ॥ ३७ ॥

इमानीमानि जानीमः प्रतिबुद्धाः स्म जागृम ।
इह ह्येतदुपादत्तं प्रेत्य स्यात् कटुकोदयम् ।
अप्रतिग्राह्यमेवैतत् प्रेत्येह च सुखेप्सुना ॥ ३८ ॥

वसिष्ठ उवाच

शतेन निष्कगणितं सहस्रेण च सम्मितम् ।
तथा बहु प्रतीच्छन् वै पापिष्ठां पतते गतिम् ॥ ३९ ॥

कश्यप उवाच

यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
सर्वं तन्नालमेकस्य तस्माद् विद्वाञ्छमं चरेत्॥ ४० ॥

भरद्वाज उवाच

उत्पन्नस्य रुरोः शृङ्गं वर्धमानस्य वर्धते ।
प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते ॥ ४१ ॥

गौतम उवाच

न तल्लोके द्रव्यमस्ति यल्लोकं प्रतिपूरयेत् ।
समुद्रकल्पः पुरुषो न कदाचन पूर्यते ॥ ४२ ॥

विश्वामित्र उवाच

कामं कामयमानस्य यदा कामः समृध्यते ।
अथैनमपरः कामस्तृष्णाविध्यति बाणवत् ॥ ४३ ॥

( अत्रिरुवाच

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ )

जमदग्निरुवाच

प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।
तद् धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ ४४ ॥

अरुन्धत्युवाच

धर्मार्थं संचयो यो वै द्रव्याणां पक्षसम्मतः ।
तपःसंचय एवेह विशिष्टो द्रव्यसंचयात् ॥ ४५ ॥

गण्डोवाच

उग्रादितो भयाद् यस्माद् बिभ्यतीमे ममेश्वराः।
बलीयांसो दुर्बलवद् बिभेम्यहमतः परम् ॥ ४६ ॥

पशुसख उवाच

यद् वै धर्मे परं नास्ति ब्राह्मणास्तद्धनं विदुः ।
विनयार्थं सुविद्वांसमुपासेयं यथातथम् ॥ ४७ ॥

ऋषय ऊचुः

कुशलं सह दानेन तस्मै यस्य प्रजा इमाः ।
फलान्युपधियुक्तानि य एवं नः प्रयच्छति ॥ ४८ ॥

भीष्म उवाच

इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि वै।
ऋषयो जग्मुरन्यत्र सर्व एव धृतव्रताः ॥ ४९ ॥

मन्त्रिण ऊचुः

उपाधिं शङ्कमानास्ते हित्वा तानि फलानि वै ।
ततोऽन्येनैव गच्छन्ति विदितं तेऽस्तु पार्थिव॥५० ॥

इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह ।
तेषां वै प्रतिकर्तुं च सर्वेषामगमद् गृहम् ॥ ५१ ॥
स गत्वा हवनीयेऽग्नौ तीव्रं नियममास्थितः ।
जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृपः ॥ ५२ ॥
तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयंकरी ।
तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ॥ ५३ ॥
सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता ।
वृषादर्भिं नरपतिं किं करोमीति चाब्रवीत् ॥ ५४ ॥

वृषादर्भिरुवाच

ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च ।
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥ ५५ ॥
ज्ञात्वा नामानि चैवैषां सर्वानेतान् विनाशय ।
विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव ॥ ५६ ॥
सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी ।
जगाम तद् वनं यत्र विचेरुस्ते महर्षयः ॥ ५७ ॥

भीष्म उवाच

अथात्रिप्रमुखा राजन् वने तस्मिन् महर्षयः ।
व्यचरन् भक्षयन्तो वै मूलानि च फलानि च ॥ ५८ ॥
अथापश्यन् सुपीनांसपाणिपादमुखोदरम् ।
परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुना सह ॥ ५९ ॥
अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभम् ।
भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ ६० ॥

वसिष्ठ उवाच

नैतस्येह यथास्माकमग्निहोत्रमनिर्हुतम् ।
सायं प्रातश्च होतव्यं तेन पीवाञ्छुना सह ॥ ६१ ॥

अत्रिरुवाच

नैतस्येह यथास्माकं क्षुधा वीर्यं समाहृतम् ।
कृच्छ्राधीतं प्रणष्टं च तेन पीवाञ्छुना सह ॥ ६२ ॥

विश्वामित्र उवाच

नैतस्येह यथास्माकं शश्वच्छास्त्रं जरद्गवः ।
अलसः क्षुत्परो मूर्खस्तेन पीवाञ्छुना सह ॥ ६३ ॥

जमदग्निरुवाच

नैतस्येह यथास्माकं भक्तमिन्धनमेव च ।
संचिन्त्यं वार्षिकं चित्ते तेन पीवाञ्छुना सह ॥ ६४ ॥

कश्यप उवाच

नैतस्येह यथास्माकं चत्वारश्च सहोदराः ।
देहि देहीति भिक्षन्ति तेन पीवाञ्छुना सह ॥ ६५ ॥

भरद्वाज उवाच

नैतस्येह यथास्माकं ब्रह्मबन्धोरचेतसः ।
शोको भार्यापवादेन तेन पीवाञ्छुना सह ॥ ६६ ॥

गौतम उवाच

नैतस्येह यथास्माकं त्रिकौशेयं च राङ्कवम् ।
एकैकं वै त्रिवर्षीयं तेन पीवाञ्छुना सह ॥ ६७ ॥

*भीष्म उवाच*

अथ दृष्ट्वा परिव्राट् स तान् महर्षीन् शुना सह ।
अभिगम्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ ६८ ॥
परिचर्यां वने तां तु क्षुत्प्रतीघातकारिकाम् ।
अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ ६९ ॥
एकनिश्चयकार्याश्च व्यचरन्त वनानि ते ।
आददानाः समुद्धृत्य मूलानि च फलानि च ॥ ७० ॥
कदाचिद् विचरन्तस्ते वृक्षैरविरलैर्वृताम् ।
शुचिवारिप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥ ७१ ॥
बालादित्यवपुःप्रख्यैः पुष्करैरुपशोभिताम् ।
वैदूर्यवर्णसदृशैः पद्मपत्रैरथावृताम् ॥ ७२ ॥
नानाविधैश्च विहगैर्जलप्रकरसेविभिः ।
एकद्वारामनादेयां सूपतीर्थामकर्दमाम् ॥ ७३ ॥
वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना ।
यातुधानीति विख्याता पद्मिनीं तामरक्षत ॥ ७४ ॥
पशुसखसहायास्तु बिसार्थं ते महर्षयः ।
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् ॥ ७५ ॥
ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम् ।
स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः ॥ ७६ ॥
एका तिष्ठसि का च त्वं कस्यार्थे किं प्रयोजनम् ।
पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किं चिकीर्षसि ॥ ७७ ॥

*यातुधान्युवाच*

यास्मि सास्म्यनुयोगो मे न कर्तव्यः कथंचन ।
आरक्षिणीं मां पद्मिन्या वित्त सर्वे तपोधनाः ॥ ७८ ॥

*ऋषय ऊचुः*

सर्व एव क्षुधार्ताः स्म न चान्यत् किंचिदस्ति नः ।
भवत्याः सम्मते सर्वे गृह्णीयाम बिसान्युत ॥ ७९ ॥

*यातुधान्युवाच*

समयेन बिसानीतो गृह्णीध्वं कामकारतः ।
एकैको नाम मे प्रोक्त्वा ततो गृह्णीत माचिरम् ॥ ८० ॥

*भीष्म उवाच*

विज्ञाय यातुधानीं तां कृत्यामृषिवधैषिणीम् ।
अत्रिः क्षुधापरीतात्मा ततो वचनमब्रवीत् ॥ ८१ ॥

*अत्रिरुवाच*

अरात्रिरत्रिः सा रात्रिर्यां नाधीते त्रिरद्य वै ।
अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने ॥ ८२ ॥

*यातुधान्युवाच*

यथोदाहृतमेतत् ते मयि नाम महाद्युते ।
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ८३ ॥

*वसिष्ठ उवाच*

वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासगृहेष्वपि ।
वसिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्धि माम् ॥ ८४ ॥

*यातुधान्युवाच*

नामनैरुक्तमेतत् ते दुःखव्याभाषिताक्षरम् ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८५ ॥

*कश्यप उवाच*

कुलं कुलं च कुवमः कुवमः कश्यपो द्विजः ।
काश्यः काशनिकाशत्वादेतन्मे नाम धारय ॥ ८६ ॥

*यातुधान्युवाच*

यथोदाहृतमेतत् ते मयि नाम महाद्युते ।
दुर्धार्यमेतन्मनसा गच्छावतर पद्मिनीम् ॥ ८७ ॥

*भरद्वाज उवाच*

भरेऽसुतान् भरेऽशिष्यान् भरे देवान् भरे द्विजान् ।
भरे भार्यां भरे द्वाजं भरद्वाजोऽस्मि शोभने ॥ ८८ ॥

*यातुधान्युवाच*

नामनैरुक्तमेतत् ते दुःखव्याभाषिताक्षरम् ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ८९ ॥

*गौतम उवाच*

गोदमो दमतोऽधूमोऽदमस्ते समदर्शनात् ।
विद्धि मां गौतमं कृत्ये यातुधानि निबोध माम् ॥ ९० ॥

*यातुधान्युवाच*

यथोदाहृतमेतत् ते मयि नाम महामुने ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९१ ॥

*विश्वामित्र उवाच*

विश्वे देवाश्च मे मित्रं मित्रमस्मि गवां तथा ।
विश्वामित्रमिति ख्यातं यातुधानि निबोध माम् ॥ ९२ ॥

*यातुधान्युवाच*

नामनैरुक्तमेतत् ते दुःखव्याभाषिताक्षरम् ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९३ ॥

*जमदग्निरुवाच*

जाजमद्यजजानेऽहं जिजाहीह जिजायिषि ।
जमदग्निरिति ख्यातस्ततो मां विद्धि शोभने ॥ ९४ ॥

*यातुधान्युवाच*

यथोदाहृतमेतत् ते मयि नाम महामुने ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९५ ॥

*अरुन्धत्युवाच*

धरान् धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम् ।
मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम् ॥ ९६ ॥

*यातुधान्युवाच*

नामनैरुक्तमेतत् ते दुःखव्याभाषिताक्षरम् ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९७ ॥

*गण्डोवाच*

वक्त्रैकदेशे गण्डेति धातुमेतं प्रचक्षते ।
तेनोन्नतेन गण्डेति विद्धि मानलसम्भवे ॥ ९८ ॥

यातुधान्युवाच

नामनैरुक्तमेतत् ते दुःखव्याभाषिताक्षरम् ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ ९९ ॥

पशुसख उवाच

पशून् रक्षामि दृष्ट्वाहं पशूनां च सदा सखा ।
गौणं पशुसखेत्येवं विद्धि मामग्निसम्भवे ॥ १०० ॥

यातुधान्युवाच

नामनैरुक्तमेतत् ते दुःखव्याभाषिताक्षरम् ।
नैतद् धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ १०१ ॥

शुनःसख उवाच

एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे ।
शुनःसखसखायं मां यातुधान्युपधारय ॥ १०२ ॥

यातुधान्युवाच

नामनैरुक्तमेतत् ते वाक्यं संदिग्धया गिरा ।
तस्मात् पुनरिदानीं त्वं ब्रूहि यन्नाम ते द्विज ॥ १०३ ॥

शुनःसख उवाच

सकृदुक्तं मया नाम न गृहीतं त्वया यदि ।
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति मा चिरम् ॥ १०४ ॥
सा ब्रह्मदण्डकल्पेन तेन मूर्ध्नि हता तदा ।
कृत्या पपात मेदिन्यां भस्म सा च जगाम ह ॥ १०५ ॥
शुनःसखा च हत्वा तां यातुधानीं महाबलाम् ।
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ॥ १०६ ॥
ततस्ते मुनयः सर्वे पुष्कराणि बिसानि च ।
यथाकाममुपादाय समुत्तस्थुर्मुदान्विताः ॥ १०७ ॥
श्रमेण महता कृत्वा ते बिसानि कलापशः ।
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ॥ १०८ ॥
अथोत्थाय जलात् तस्मात् सर्वे ते समुपागमन् ।
नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभाः ॥ १०९ ॥

ऋषय ऊचुः

केन क्षुधापरीतानामस्माकं पापकर्मणाम् ।
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥ ११० ॥
ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ।
त ऊचुः समयं सर्वे कुर्म इत्यरिकर्शन ॥ १११ ॥
त उक्त्वा बाढमित्येवं सर्व एव तदा समम् ।
क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ॥ ११२ ॥

अत्रिरुवाच

स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु ।
अनध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥ ११३ ॥

वसिष्ठ उवाच

अनध्याये पठेल्लोके शुनः स परिकर्षतु ।
परिव्राट् कामवृत्तस्तु बिसस्तैन्यं करोति यः ॥ ११४ ॥
शरणागतं हन्तु स वै स्वसुतां चोपजीवतु ।
अर्थान् काङ्क्षतु कीनाशाद् बिसस्तैन्यं करोति यः ॥ ११५ ॥

कश्यप उवाच

सर्वत्र सर्वं लपतु न्यासलोपं करोतु तु ।
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ ११६ ॥
वृथामांसाशनश्चास्तु वृथादानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥ ११७ ॥

भरद्वाज उवाच

नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ॥ ११८ ॥
उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च ।
जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ॥ ११९ ॥

जमदग्निरुवाच

पुरीषमुत्सृजत्वप्सु हन्तु गां चैव दुह्यतु ।
अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥ १२० ॥
द्वेष्यो भार्योपजीवी स्याद् दूरबन्धुश्च वैरवान् ।
अन्योन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ॥ १२१ ॥

गौतम उवाच

अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु ।
विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ॥ १२२ ॥
उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ॥ १२३ ॥

विश्वामित्र उवाच

जीवतो वै गुरून् भृत्यान् भरन्त्वस्य परे जनाः ।
अगतिर्बहुपुत्रः स्याद् बिसस्तैन्यं करोति यः ॥ १२४ ॥
अशुचिर्ब्रह्मकूटोऽस्तु ऋद्ध्या चैवाप्यहंकृतः ।
कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥ १२५ ॥
वर्षाचरोऽस्तु भृतको राज्ञश्चास्तु पुरोहितः ।
अयाज्यस्य भवेदृत्विग् बिसस्तैन्यं करोति यः ॥ १२६ ॥

अरुन्धत्युवाच

नित्यं परिभवेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समाश्नातु बिसस्तैन्यं करोति या ॥ १२७ ॥
ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये ।
अभोग्यावीरसूरस्तु बिसस्तैन्यं करोति या ॥ १२८ ॥

गण्डोवाच

अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु ।
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥ १२९ ॥
साधयित्वा स्वयं प्राशेद् दास्ये जीर्यतु चैव ह ।
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥ १३० ॥

पशुसख उवाच

दास एव प्रजायेतामप्रसूतिरकिंचनः ।
दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ॥ १३१ ॥

*शुनःसख उवाच*

अध्वर्यवे दुहितरं वा ददातु
छन्दोगे वा चरितब्रह्मचर्ये ।
आथर्वणं वेदमधीत्य विप्रः
स्नायीत वा यो हरते बिसानि ॥१३२॥

*ऋषय ऊचुः*

इष्टमेतद् द्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनःसख ॥१३३॥

*शुनःसख उवाच*

न्यस्तमद्यं न पश्यद्भिर्यदुक्तं कृतकर्मभिः ।
सत्यमेतन्न मिथ्यैतद् बिसस्तैन्यं कृतं मया ॥१३४॥
मया ह्यन्तर्हितानीह बिसानीमानि पश्यत ।
परीक्षार्थं भगवतां कृतमेवं मयानघाः ॥१३५॥
रक्षणार्थं च सर्वेषां भवतामहमागतः ।
यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी ॥१३६॥
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ।
दुष्टा हिंस्यादियं पापा युष्मान् प्रत्यग्निसम्भवा ॥१३७॥
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ।
अलोभादक्षया लोकाः प्राप्ता वै सार्वकामिकाः ॥१३८॥
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥१३९॥

*भीष्म उवाच*

ततो महर्षयः प्रीतास्तथेत्युक्त्वा पुरंदरम् ।
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ॥१४०॥
एवमेते महात्मानो भोगैर्बहुविधैरपि ।
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः ॥१४१॥
नैव लोभं तदा चक्रुस्ततः स्वर्गमवाप्नुवन् ॥१४२॥
तस्मात् सर्वास्ववस्थासु नरो लोभं विवर्जयेत् ।
एष धर्मः परो राजंस्तस्माल्लोभं विवर्जयेत् ॥१४३॥
इदं नरः सुचरितं समवायेषु कीर्तयन् ।
अर्थभागी च भवति न च दुर्गाण्यवाप्नुते ॥१४४॥
प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा ।
यशोधर्मार्थभागी च भवति प्रेत्य मानवः ॥१४५॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि बिसस्तैन्योपाख्याने त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः

**ब्रह्मसरतीर्थेऽगस्त्यस्य पद्मपुष्पाणामपहृते सति ब्रह्मर्षीणां राजर्षीणां च धर्मोपदेशगर्भितः शपथः, धर्मज्ञानार्थमपहृतानां पद्मपुष्पाणां प्रत्यावर्तनम्**

*भीष्म उवाच*

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यद् वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥ १ ॥
पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम ।
राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥ २ ॥
ऋषयः समेताः पश्चिमे वै प्रभासे
समागता मन्त्रममन्त्रयन्त ।
चराम सर्वां पृथिवीं पुण्यतीर्थां
तन्नः कामं हन्त गच्छाम सर्वे ॥ ३ ॥
शुक्रोऽङ्गिराश्चैव कविश्च विद्वां-
स्तथा ह्यगस्त्यो नारदपर्वतौ च ।
भृगुर्वसिष्ठः कश्यपो गौतमश्च
विश्वामित्रो जमदग्निश्च राजन् ॥ ४ ॥
ऋषिस्तथा गालवोऽथाष्टकश्च
भरद्वाजोऽरुन्धती वालखिल्याः ।
शिबिर्दिलीपो नहुषोऽम्बरीषो
राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥ ५ ॥
जग्मुः पुरस्कृत्य महानुभावं
शतक्रतुं वृत्रहणं नरेन्द्राः ।
तीर्थानि सर्वाणि परिभ्रमन्तो
माघ्यां ययुः कौशिकीं पुण्यतीर्थाम् ॥ ६ ॥
सर्वेषु तीर्थेष्ववधूतपापा
जग्मुस्ततो ब्रह्मसरः सुपुण्यम् ।
देवस्य तीर्थे जलमग्निकल्पा
विगाह्य ते भुक्तबिसप्रसूनाः ॥ ७ ॥
केचिद् बिसान्यखनंस्तत्र राज-
न्नन्ये मृणालान्यखनंस्तत्र विप्राः ।
अथापश्यन् पुष्करं ते ह्रियन्तं
ह्रदादगस्त्येन समुद्धृतं तत् ॥ ८ ॥
तानाह सर्वानृषिमुख्यानगस्त्यः
केनादत्तं पुष्करं मे सुजातम् ।
युष्माञ्शङ्के पुष्करं दीयतां मे
न वै भवन्तो हर्तुमर्हन्ति पद्मम् ॥ ९ ॥
शृणोमि कालो हिंसते धर्मवीर्यं
सोऽयं प्राप्तो वर्तते धर्मपीडा ।
पुराधर्मो वर्तते नेह यावत्
तावद् गच्छामः सुरलोकं चिराय ॥१०॥
पुरा वेदान् ब्राह्मणा ग्राममध्ये
घुष्टस्वरा वृषलाञ्श्रावयन्ति ।
पुरा राजा व्यवहारेण धर्मान्
पश्यत्यहं परलोकं व्रजामि ॥ ११ ॥

पुरा वरान् प्रत्यवरान् गरीयसो
यावन्नरा नावमंस्यन्ति सर्वे ।
तमोत्तरं यावदिदं न वर्तते
तावद् व्रजामि परलोकं चिराय ॥ १२ ॥
पुरा प्रपश्यामि परेण मर्त्यान्
बलीयसा दुर्बलान् भुज्यमानान् ।
तस्माद् यास्यामि परलोकं चिराय
ह्युत्सहे द्रष्टुमिह जीवलोकम् ॥ १३ ॥
तमाहुरार्ता ऋषयो महर्षिं
न ते वयं पुष्करं चोरयामः ।
मिथ्याभिषङ्गो भवता न कार्यः
शपाम तीक्ष्णैः शपथैर्महर्षे ॥ १४ ॥
ते निश्चितास्तत्र महर्षयस्तु
सम्पश्यन्तो धर्ममेतं नरेन्द्राः ।
ततोऽशपन्त शपथान् पर्ययेण
सहैव ते पार्थिव पुत्रपौत्रैः ॥ १५ ॥

*भृगुरुवाच*

प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत् ।
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥ १६ ॥

*वसिष्ठ उवाच*

अस्वाध्यायपरो लोके श्वानं च परिकर्षतु ।
पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥ १७ ॥

*कश्यप उवाच*

सर्वत्र सर्वं पणतु न्यासे लोभं करोतु च ।
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम् ॥ १८ ॥

*गौतम उवाच*

जीवत्वहंकृतो बुद्ध्या विषमेणासमेन सः ।
कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम् ॥ १९ ॥

*अङ्गिरा उवाच*

अशुचिर्ब्रह्मकूटोऽस्तु श्वानं च परिकर्षतु ।
ब्रह्महानिकृतिश्चास्तु यस्ते हरति पुष्करम् ॥ २० ॥

*धुन्धुमार उवाच*

अकृतज्ञस्तु मित्राणां शूद्रायां च प्रजायतु ।
एकः सम्पन्नमश्नातु यस्ते हरति पुष्करम् ॥ २१ ॥

*पूरुरुवाच*

चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु ।
श्वशुरात्तस्य वृत्तिः स्याद् यस्ते हरति पुष्करम् ॥ २२ ॥

*दिलीप उवाच*

उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य लोकान् स व्रजतु यस्ते हरति पुष्करम् ॥ २३ ॥

*शुक्र उवाच*

वृथामांसं समश्नातु दिवा गच्छतु मैथुनम् ।
प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् ॥ २४ ॥

*जमदग्निरुवाच*

अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् ।
श्राद्धे शूद्रस्य चाश्नीयाद् यस्ते हरति पुष्करम् ॥ २५ ॥

*शिबिरुवाच*

अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च ।
तपस्विभिर्विरुध्येच्च यस्ते हरति पुष्करम् ॥ २६ ॥

*ययातिरुवाच*

अनृतौ च व्रती चैव भार्यायां स प्रजायतु ।
निराकरोतु वेदांश्च यस्ते हरति पुष्करम् ॥ २७ ॥

*नहुष उवाच*

अतिथिर्गृहसंस्थोऽस्तु कामवृत्तस्तु दीक्षितः ।
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम् ॥ २८ ॥

*अम्बरीष उवाच*

नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
निहन्तु ब्राह्मणं चापि यस्ते हरति पुष्करम् ॥ २९ ॥

*नारद उवाच*

गृहज्ञानी बहिःशास्त्रं पठतां विस्वरं पदम् ।
गरीयसोऽवजानातु यस्ते हरति पुष्करम् ॥ ३० ॥

*नाभाग उवाच*

अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु ।
शुल्केन तु ददत्कन्यां यस्ते हरति पुष्करम् ॥ ३१ ॥

*कविरुवाच*

पद्भ्यां स गां ताडयतु सूर्यं च प्रतिमेहतु ।
शरणागतं संत्यजतु यस्ते हरति पुष्करम् ॥ ३२ ॥

*विश्वामित्र उवाच*

करोतु भृतकोऽवर्षां राज्ञश्चास्तु पुरोहितः ।
ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम् ॥ ३३ ॥

*पर्वत उवाच*

ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु ।
शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम् ॥ ३४ ॥

*भरद्वाज उवाच*

सर्वपापसमादानं नृशंसे चानृते च यत् ।
तत् तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥ ३५ ॥

*अष्टक उवाच*

स राजास्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत् ।
अधर्मेणाभिशास्तूर्वीं यस्ते हरति पुष्करम् ॥ ३६ ॥

*गालव उवाच*

पापिष्ठेभ्यो ह्यनर्घार्हः स नरोऽस्तु स्वपापकृत् ।
दत्त्वा दानं कीर्तयतु यस्ते हरति पुष्करम् ॥ ३७ ॥

*अरुन्धत्युवाच*

श्वश्रूापवादं वदतु भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु या ते हरति पुष्करम् ॥ ३८ ॥

*वालखिल्या ऊचुः*

एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु ।
धर्मज्ञस्त्यक्तधर्मास्तु यस्ते हरति पुष्करम् ॥ ३९ ॥

*शुनःसख उवाच*

अग्निहोत्रमनादृत्य स सुखं स्वपतु द्विजः ।
परिव्राट् कामवृत्तोऽस्तु यस्ते हरति पुष्करम् ॥ ४० ॥

*सुरभ्युवाच*

बालजेन निदानेन कांस्यं भवतु दोहनम् ।
दुह्येत परवत्सेन या ते हरति पुष्करम् ॥ ४१ ॥

*भीष्म उवाच*

ततस्तु तैः शपथैः शप्यमानै-
र्नानाविधैर्बहुभिः कौरवेन्द्र ।
सहस्राक्षो देवराट् सम्प्रहृष्टः
समीक्ष्य तं कोपनं विप्रमुख्यम् ॥ ४२ ॥
अथाब्रवीन्मघवा प्रत्ययं स्वं
समाभाष्य तमृषिं जातरोषम् ।
ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये
यं तं निबोधेह ममाद्य राजन् ॥ ४३ ॥

*शक्र उवाच*

अध्वर्यवे दुहितरं ददातु
छन्दोगे वा चरितब्रह्मचर्ये ।
अथर्वणं वेदमधीत्य विप्रः
स्नायीत यः पुष्करमाददाति ॥ ४४ ॥
सर्वान् वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः ।
ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ॥ ४५ ॥

*अगस्त्य उवाच*

आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन ।
दीयतां पुष्करं मह्यमेष धर्मः सनातनः ॥ ४६ ॥

*इन्द्र उवाच*

न मया भगवँल्लोभाद्धृतं पुष्करमद्य वै ।
धर्मांस्तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥ ४७ ॥
धर्मश्रुतिसमुत्कर्षो धर्मसेतुरनामयः ।
आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ॥ ४८ ॥
तदिदं गृह्यतां विद्वन् पुष्करं द्विजसत्तम ।
अतिक्रमं मे भगवन् क्षन्तुमर्हस्यनिन्दित ॥ ४९ ॥
इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम् ।
जग्राह पुष्करं धीमान् प्रसन्नश्चाभवन्मुनिः ॥ ५० ॥
प्रययुस्ते ततो भूयस्तीर्थानि वनगोचराः ।
पुण्येषु तीर्थेषु तथा गात्राण्याप्लावयन्त ते ॥ ५१ ॥
आख्यानं य इदं युक्तः पठेत् पर्वणि पर्वणि ।
न मूर्खं जनयेत् पुत्रं न भवेच्च निराकृतिः ॥ ५२ ॥
न तमापत् स्पृशेत् काचिद् विज्वरो न जरावहः ।
विरजाः श्रेयसा युक्तः प्रेत्य स्वर्गमवाप्नुयात् ॥ ५३ ॥
यश्च शास्त्रमधीयीत ऋषिभिः परिपालितम् ।
स गच्छेद् ब्रह्मणो लोकमव्ययं च नरोत्तम ॥ ५४ ॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि शपथविधिर्नाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

# पञ्चनवतितमोऽध्यायः

छत्रोपानहामुत्पत्तौ दाने च युधिष्ठिरस्य प्रश्नः, सूर्यरश्मिभी रेणुकायाः शिरः पादौ च संतप्ताविति विज्ञाय जमदग्नेः सूर्योपरि कोपो विप्ररूपिणा सूर्येण सह वार्तालापश्च

*युधिष्ठिर उवाच*

यदिदं श्राद्धकृत्येषु दीयते भरतर्षभ ।
छत्रं चोपानहौ चैव केनैतत् सम्प्रवर्तितम् ॥ १ ॥
कथं चैतत् समुत्पन्नं किमर्थं चैव दीयते ।
न केवलं श्राद्धकृत्ये पुण्यकेष्वपि दीयते ॥ २ ॥
बहुष्वपि निमित्तेषु पुण्यमाश्रित्य दीयते ।
एतद् विस्तरशो राजञ्छ्रोतुमिच्छामि तत्त्वतः॥ ३ ॥

*भीष्म उवाच*

शृणु राजन्नवहितश्छत्रोपानहविस्तरम् ।
यथैतत् प्रथितं लोके यथा चैतत् प्रवर्तितम् ॥ ४ ॥
यथा चाक्षय्यतां प्राप्तं पुण्यतां च यथा गतम् ।
सर्वमेतदशेषेण प्रवक्ष्यामि नराधिप ॥ ५ ॥
जमदग्नेश्च संवादं सूर्यस्य च महात्मनः ।
पुरा स भगवान् साक्षाद्धनुषाक्रीडयत् प्रभो ॥ ६ ॥
संधाय संधाय शरांश्चिक्षेप किल भार्गवः ।
तान् क्षिप्तान् रेणुका सर्वांस्तस्येषून्दीप्ततेजसः ॥ ७ ॥
आनीय सा तदा तस्मै प्रादादसकृदच्युत ।
अथ तेन स शब्देन ज्यायाश्चैव शरस्य च ॥ ८ ॥
प्रहृष्टः सम्प्रचिक्षेप सा च प्रत्याजहार तान् ।
ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे ॥ ९ ॥
स सायकान् द्विजो मुक्त्वा रेणुकामिदमब्रवीत् ।
गच्छानय विशालाक्षि शरानेतान् धनुश्च्युतान् ॥ १० ॥
यावदेतान् पुनः सुभ्रु क्षिपामीति जनाधिप ।
सा गच्छन्त्यन्तरा छायां वृक्षमाश्रित्य भामिनी ॥ ११ ॥

तस्थौ तस्या हि संतप्तं शिरः पादौ तथैव च ।
स्थिता सा तु मुहूर्तं वै भर्तुःशापभयाच्छुभा ॥ १२ ॥
ययावानयितुं भूयः सायकानसितेक्षणा ।
प्रत्याजगाम च शरांस्तानादाय यशस्विनी ॥ १३ ॥
सा वै खिन्ना सुचार्वङ्गी पद्भ्यां दुःखं नियच्छती ।
उपाजगाम भर्तारं भयाद् भर्तुः प्रवेपती ॥ १४ ॥
स तामृषिस्तदा क्रुद्धो वाक्यमाह शुभाननाम् ।
रेणुके किं चिरेण त्वमागतेति पुनः पुनः ॥ १५ ॥

रेणुकोवाच

शिरस्तावत् प्रदीप्तं मे पादौ चैव तपोधन ।
सूर्यतेजोनिरुद्धाहं वृक्षच्छायां समाश्रिता ॥ १६ ॥
एतस्मात् कारणाद् ब्रह्मंश्चिरायैतत् कृतं मया ।
एतच्छ्रुत्वा मम विभो मा क्रुधस्त्वं तपोधन ॥ १७ ॥

जमदग्निरुवाच

अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ॥ १८ ॥

भीष्म उवाच

स विस्फार्य धनुर्दिव्यं गृहीत्वा च शरान् बहून् ।
अतिष्ठत् सूर्यमभितो यतो याति ततो मुखः ॥ १९ ॥
अथ तं प्रेक्ष्य सन्नद्धं सूर्योऽभ्येत्य तथाब्रवीत् ।
द्विजरूपेण कौन्तेय किं ते सूर्योऽपराध्यते ॥ २० ॥
आदत्ते रश्मिभिः सूर्यो दिवि तिष्ठंस्ततस्ततः ।
रसं हृतं वै वर्षासु प्रवर्षति दिवाकरः ॥ २१ ॥
ततोऽन्नं जायते विप्र मनुष्याणां सुखावहम् ।
अन्नं प्राणा इति यथा वेदेषु परिपठ्यते ॥ २२ ॥
अथाभ्रेषु निगूढश्च रश्मिभिः परिवारितः ।
सप्तद्वीपानिमान् ब्रह्मन् वर्षेणाभिप्रवर्षति ॥ २३ ॥
ततस्तदौषधीनां च वीरुधां पुष्पपत्रजम् ।
सर्वं वर्षाभिनिर्वृत्तमन्नं सम्भवति प्रभो ॥ २४ ॥
जातकर्माणि सर्वाणि व्रतोपनयनानि च ।
गोदानानि विवाहाश्च तथा यज्ञसमृद्धयः ॥ २५ ॥
शास्त्राणि दानानि तथा संयोगा वित्तसंचयाः ।
अन्नतः सम्प्रवर्तन्ते तथा त्वं वेत्थ भार्गव ॥ २६ ॥
रमणीयानि यावन्ति यावदारम्भकाणि च ।
सर्वमन्नात् प्रभवति विदितं कीर्तयामि ते ॥ २७ ॥
सर्वं हि वेत्थ विप्र त्वं यदेतत् कीर्तितं मया ।
प्रसादये त्वां विप्रर्षे किं ते सूर्यं निपात्य वै ॥ २८ ॥

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि छत्रोपानहोत्पत्तिर्नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

# षण्णवतितमोऽध्यायः

## छत्रोपानहाद्युत्पत्तिर्दानप्रशंसा च

युधिष्ठिर उवाच

एवं प्रयाचति तदा भास्करे मुनिसत्तमः ।
जमदग्निर्महातेजाः किं कार्यं प्रत्यपद्यत ॥ १ ॥

भीष्म उवाच

स तथा याचमानस्य मुनिरग्निसमप्रभः ।
जमदग्निः शमं नैव जगाम कुरुनन्दन ॥ २ ॥
ततः सूर्यो मधुरया वाचा तमिदमब्रवीत् ।
कृताञ्जलिर्विप्ररूपी प्रणम्यैनं विशाम्पते ॥ ३ ॥
चलं निमित्तं विप्रर्षे सदा सूर्यस्य गच्छतः ।
कथं चलं भेत्स्यसि त्वं सदा यान्तं दिवाकरम् ॥ ४ ॥

जमदग्निरुवाच

स्थिरं चापि चलं चापि जाने त्वां ज्ञानचक्षुषा ।
अवश्यं विनयाधानं कार्यमद्य मया तव ॥ ५ ॥
मध्याह्ने वै निमेषार्धं तिष्ठसि त्वं दिवाकर ।
तत्र भेत्स्यामि सूर्य त्वां न मेऽत्रास्ति विचारणा ॥ ६ ॥

सूर्य उवाच

असंशयं मां विप्रर्षे भेत्स्यसे धन्विनां वर ।
अपकारिणं मां विद्धि भगवञ्छरणागतम् ॥ ७ ॥

भीष्म उवाच

ततः प्रहस्य भगवान् जमदग्निरुवाच तम् ।
न भीः सूर्य त्वया कार्या प्रणिपातगतो ह्यसि ॥ ८ ॥
ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले ।
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च ॥ ९ ॥
दीप्तिमग्नेः प्रभां मेरोः प्रतापं तपनस्य च ।
एतान्यतिक्रमेद् यो वै स हन्याच्छरणागतम् ॥ १० ॥
भवेत् स गुरुतल्पी च ब्रह्महा च स वै भवेत् ।
सुरापानं स कुर्याच्च यो हन्याच्छरणागतम् ॥ ११ ॥
एतस्य त्वपनीतस्य समाधिं तात चिन्तय ।
यथा सुखगमः पन्था भवेत् त्वद्रश्मिभावितः ॥ १२ ॥

भीष्म उवाच

एतावदुक्त्वा स तदा तूष्णीमासीद् भृगूत्तमः ।
अथ सूर्योऽददत् तस्मै छत्रोपानहमाशु वै ॥ १३ ॥

सूर्य उवाच

महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके ॥ १४ ॥
अद्यप्रभृति चैवेह लोके सम्प्रचरिष्यति ।
पुण्यकेषु च सर्वेषु परमक्षय्यमेव च ॥ १५ ॥

भीष्म उवाच

छत्रोपानहमेतत् तु सूर्येणैतत् प्रवर्तितम्।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥ १६ ॥
तस्मात् प्रयच्छ विप्रेषु छत्रोपानहमुत्तमम्।
धर्मस्तेषु महान् भावी न मेऽत्रास्ति विचारणा ॥ १७ ॥
छत्रं हि भरतश्रेष्ठ यः प्रदद्याद् द्विजातये।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥ १८ ॥
स शक्रलोके वसति पूज्यमानो द्विजातिभिः।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥ १९ ॥
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥ २० ॥
सोऽपि लोकानवाप्नोति दैवतैरभिपूजितान्।
गोलोके स मुदा युक्तो वसति प्रेत्य भारत ॥ २१ ॥
एतत् ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम्।
छत्रोपानहदानस्य फलं भरतसत्तम ॥ २२ ॥

युधिष्ठिर उवाच

शूद्राणामिह शुश्रूषा नित्यमेवानुवर्णिता।
कैः कारणैः कतिविधा शुश्रूषा समुदाहृता ॥
के च शुश्रूषया लोका विहिता भरतर्षभ।
शूद्राणां भरतश्रेष्ठ ब्रूहि मे धर्मलक्षणम् ॥

भीष्म उवाच

अत्राप्युदाहरन्तीममितिहासं पुरातनम्।
शूद्राणामनुकम्पार्थं यदुक्तं ब्रह्मवादिना ॥
वृद्धः पराशरः प्राह धर्मं शुभ्रमनामयम्।
अनुग्रहार्थं वर्णानां शौचाचारसमन्वितम् ॥
धर्मोपदेशमखिलं यथावदनुपूर्वशः।
शिष्यानध्यापयामास शास्त्रमर्थवदर्थवित् ॥

पराशर उवाच

क्षान्तेन्द्रियेण दान्तेन शुचिनाचापलेन वै।
अदुर्बलेन धीरेण नोत्तरोत्तरवादिना ॥
अलुब्धेनानृशंसेन ऋजुना ब्रह्मवादिना।
चारित्रतत्परेणैव सर्वभूतहितात्मना ॥
अरयः षड् विजेतव्या नित्यं स्वं देहमाश्रिताः।
कामक्रोधौ च लोभश्च मानमोहौ मदस्तथा ॥
विधिना धृतिमास्थाय शुश्रूषुरनहंकृतः।
वर्णत्रयस्यानुमतो यथाशक्ति यथाबलम् ॥
कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम्।
आस्थाय नियमं धीमाञ्शान्तो दान्तो जितेन्द्रियः ॥
नित्यं दक्षजनान्वेषी शेषान्नकृतभोजनः।
वर्णत्रयान्मधु यथा भ्रमरो धर्ममाचरन् ॥
स्वाध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम्।
वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ॥
व्युच्छेदात् तस्य धर्मस्य निरयायोपपद्यते।
ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ॥
पुनश्च निरयं तेषां तिर्यग्योनिश्च शाश्वती।
ये तु सत्पथमास्थाय वर्णाश्रमकृतं पुरा ॥
सर्वान् विमार्गानुत्सृज्य स्वधर्मपथमाश्रिताः।
सर्वभूतदयावन्तो दैवतद्विजपूजकाः ॥
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः।
तेषां विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ॥
उपादानविधिं कृत्स्नं शुश्रूषाधिगमं तथा।
शौचकृत्यस्य शौचार्थान् सर्वानेव विशेषतः ॥
महाशौचप्रभृतयो दृष्टास्तत्त्वार्थदर्शिभिः।
तत्रापि शूद्रो भिक्षूणां मृदं शेषं च कल्पयेत् ॥
भिक्षुभिः सुकृतप्रज्ञैः केवलं धर्ममाश्रितैः।
सम्यग्दर्शनसम्पन्नैर्गताध्वनि हितार्थिभिः ॥
अवकाशमिदं मेध्यं निर्मितं कामवीरुधम्।
निर्जनं सवृतं बुद्ध्वा नियतात्मा जितेन्द्रियः ॥
सजलं भाजनं स्थाप्यं मृत्तिकां च परीक्षिताम्।
परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ॥
उदङ्मुखो दिवा कुर्याद् रात्रौ चेद् दक्षिणामुखः।
अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ॥
असमाप्ते तथा शौचे न वाचं किंचिदीरयेत्।
कृतकृत्यस्तथाऽऽचम्य गच्छन्नोदीरयेद् वचः ॥
शौचार्थमुपतिष्ठंस्तु मृद्भाजनपुरस्कृतः।
स्थाप्यं कमण्डलुं गृह्य पार्श्वोरुभ्यामथान्तरे ॥
शौचं कुर्याच्छनैर्धीरो बुद्धिपूर्वमसंकरम्।
पाणिना शुद्धमुदकं संगृह्य विधिपूर्वकम् ॥
विप्रुषश्च यथा न स्युर्यथा चोरू न संस्पृशेत्।
अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ॥
यथा घातो हि न भवेत् क्लेदजः परिधानके।
सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः।
मलोपहतचैलस्य द्विगुणं तु विधीयते ॥
सहपादमथोरुभ्यां हस्तशौचमसंशयम्।
अवधीरयमाणस्य संदेह उपजायते ॥
यथा यथा विशुद्ध्येत तत् तथा तदुपक्रमेत्।
क्षारोषराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ॥
लेपगन्धापनयनममेध्यस्य विधीयते।
देयाश्चतस्रस्तिस्रो वा द्वे वाप्येकां तथाऽऽपदि ॥
कालमासाद्य देशं च शौचस्य गुरुलाघवम्।
विधिनानेन शौचं तु नित्यं कुर्यादतन्द्रितः ॥
अविप्रेक्षन्नसम्भ्रान्तः पादौ प्रक्षाल्य तत्परः।
सुप्रक्षालितपादस्तु पाणिमामणिबन्धनात् ॥
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत्।
मनोगतास्तु निःशब्दा निःशब्दं त्रिरपः पिबेत् ॥
द्विर्मुखं परिमृज्याथ खानि चोपस्पृशेद् बुधः।

ऋग्वेदं तेन प्रीणाति प्रथमं यः पिबेदपः ॥
द्वितीयं च यजुर्वेदं तृतीयं साम एव च ।
मृज्यते प्रथमं तेन अथर्वा प्रीतिमाप्नुयात् ॥
द्वितीयेनेतिहासं च पुराणस्मृतिदेवताः ।
यच्चक्षुषि समाधत्ते तेनादित्यं तु प्रीणयेत् ॥
प्रीणाति वायुं घ्राणं च दिशश्चाप्यथ श्रोत्रयोः ।
ब्रह्माणं तेन प्रीणाति यन्मूर्धनि समालभेत् ॥
समुत्क्षिपति चापोर्ध्वमाकाशं तेन प्रीणयेत् ।
प्रीणाति विष्णुः पद्भ्यां तु सलिलं वै समादधत् ॥
प्राङ्मुखोदङ्मुखो वापि अन्तर्जानुरुपस्पृशेत् ।
सर्वत्र विधिरित्येष भोजनादिषु नित्यशः ॥
अन्नेषु दन्तलग्नेषु उच्छिष्टः पुनराचमेत् ।
विधिरेष समुद्दिष्टः शौचे चाभ्युक्षणं स्मृतम् ॥
शूद्रस्यैष विधिर्दृष्टो गृहान्निष्क्रमतः सतः ।
नित्यं चालुप्तशौचेन वर्तितव्यं कृतात्मना ॥
यशस्कामेन भिक्षुभ्यः शूद्रेणात्महितार्थिना ॥
क्षत्रा आरम्भयज्ञास्तु हविर्यज्ञा विशः स्मृताः ।
शूद्राः परिचारयज्ञा जपयज्ञास्तु ब्राह्मणाः ॥
शुश्रूषाजीविनः शूद्रा वैश्या विपणजीविनः ।
अनिष्टनिग्रहाः क्षत्रा विप्राः स्वाध्यायजीविनः ॥
तपसा शोभते विप्रो राजन्यः पालनादिभिः ।
आतिथ्येन तथा वैश्यः शूद्रो दास्येन शोभते ॥
यतात्मना तु शूद्रेण शुश्रूषा नित्यमेव तु ।
कर्तव्या त्रिषु वर्णेषु प्रायेणाश्रमवासिषु ॥
अशक्तेन त्रिवर्णस्य सेव्या ह्याश्रमवासिनः ।
यथाशक्ति यथाप्रज्ञं यथाधर्मं यथाश्रुतम् ॥
विशेषेणैव कर्तव्या शुश्रूषा भिक्षुकाश्रमे ॥
आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधानमिति मन्यन्ते शिष्टाः शास्त्रविनिश्चये ॥
यच्चोपदिश्यते शिष्टैः श्रुतिस्मृतिविधानतः ।
तथाऽऽस्थेयमशक्तेन स धर्म इति निश्चितः ॥
अतोऽन्यथा तु कुर्वाणः श्रेयो नाप्नोति मानवः ।
तस्माद् भिक्षुषु शूद्रेण कार्यमात्महितं सदा ॥
इह यत् कुरुते श्रेयस्तत् प्रेत्य समुपाश्नुते ।
तच्चानसूयता कार्यं कर्तव्यं यद्धि मन्यते ॥
असूयता कृतस्येह फलं दुःखादवाप्यते ॥
प्रियवादी जितक्रोधो वीततन्द्रिरमत्सरः ।
क्षमावाञ्शीलसम्पन्नः सत्यधर्मपरायणः ॥
आपद्भावेन कुर्याद्धि शुश्रूषां भिक्षुकाश्रमे ॥
अयं मे परमो धर्मस्त्वनेनेदं सुदुस्तरम् ।
संसारसागरं घोरं तरिष्यामि न संशयः ॥
निर्भयो देहमुत्सृज्य यास्यामि परमां गतिम् ।
नातः परं ममास्त्यन्य एष धर्मः सनातनः ॥

एवं संचिन्त्य मनसा शूद्रो बुद्धिसमाधिना ।
कुर्यादविमना नित्यं शुश्रूषाधर्ममुत्तमम् ॥
शुश्रूषानियमेनेह भाव्यं शिष्टाशिना सदा ।
शमान्वितेन दान्तेन कार्याकार्यविदा सदा ॥
सर्वकार्येषु कृत्यानि कृतान्येव च दर्शयेत् ।
यथा प्रीतो भवेद् भिक्षुस्तथा कार्यं प्रसाधयेत् ॥
यदकल्प्यं भवेद् भिक्षोर्न तत् कार्यं समाचरेत् ।
यदाश्रमस्याविरुद्धं धर्ममात्राभिसंहितम् ॥
तत् कार्यमविचारेण नित्यमेव शुभार्थिना ।
मनसा कर्मणा वाचा नित्यमेव प्रसादयेत् ॥
स्थातव्यं तिष्ठमानेषु गच्छमानाननुव्रजेत् ।
आसीनेष्वासितव्यं च नित्यमेवानुवर्तिना ॥
नैशकार्याणि कृत्वा तु नित्यं चैवानुचोदितः ।
यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम् ॥
भिक्षूणां निलयं गत्वा प्रणम्य विधिपूर्वकम् ।
ब्रह्मपूर्वान् गुरूंस्तत्र प्रणम्य नियतेन्द्रियः ॥
तथाऽऽचार्यपुरोगाणामनुकुर्यान्नमस्क्रियाम् ।
स्वधर्मचारिणां चापि सुखं पृष्ट्वाभिवाद्य च ॥
यो भवेत् पूर्वसंसिद्धस्तुल्यधर्मा भवेत् सदा ।
तस्मै प्रणामः कर्तव्यो नेतरेषां कदाचन ॥
अनुक्त्वा तेषु चोत्थाय नित्यमेव यतव्रतः ।
सम्मार्जनमथो कृत्वा कृत्वा चाप्युपलेपनम् ॥
ततः पुष्पबलिं दद्यात् पुष्पाण्यादाय धर्मतः ।
निष्क्रम्यावसथात् तूर्णमन्यत् कर्म समाचरेत् ॥
यथोपघातो न भवेत् स्वाध्यायेऽऽश्रमिणां तथा ।
उपघातं तु कुर्वाण एनसा सम्प्रयुज्यते ॥
तथाऽऽत्मा प्रणिधातव्यो यथा ते प्रीतिमाप्नुयुः ।
परिचारिकोऽहं वर्णानां त्रयाणां धर्मतः स्मृतः ॥
किमुताश्रमवृद्धानां यथालब्धोपजीविनाम् ॥
भिक्षूणां गतरागाणां केवलं ज्ञानदर्शिनाम् ।
विशेषेण मया कार्या शुश्रूषा नियतात्मना ॥
तेषां प्रसादात् तपसा प्राप्स्यामीष्टां शुभां गतिम् ॥
एवमेतद् विनिश्चित्य यदि सेवेत भिक्षुकान् ।
विधिना यथोपदिष्टेन प्राप्नोति परमां गतिम् ॥
न तथा सम्प्रदानेन नोपवासादिभिस्तथा ।
इष्टां गतिमवाप्नोति यथा शुश्रूषकर्मणा ॥
यादृशेन तु तोयेन शुद्धिं प्रकुरुते नरः ।
तादृग् भवति तद्धौतमुदकस्य स्वभावतः ॥
शूद्रोऽप्येतेन मार्गेण यादृशं सेवते जनम् ।
तादृग् भवति संसर्गादचिरेण न संशयः ॥
तस्मात् प्रयत्नतः सेव्या भिक्षवो नियतात्मना ।
अध्वना कर्शितानां च व्याधितानां तथैव च ॥

शुश्रूषां नियतः कुर्यात् तेषामापदि यत्नतः ।
दर्भाजिनान्यवेक्षेत भैक्षभाजनमेव च ॥
यथाकामं च कार्याणि सर्वाण्येवोपसाधयेत् ।
प्रायश्चित्तं यथा न स्यात् तथा सर्वं समाचरेत् ॥
व्याधितानां तु प्रयतः चैलप्रक्षालनादिभिः ।
प्रतिकर्मक्रिया कार्या भेषजानयनैस्तथा ।
भिक्षाटनोऽभिगच्छेत भिषजश्च विपश्चितः ।
ततो विनिष्क्रियार्थानि द्रव्याणि समुपार्जयेत् ॥
यश्च प्रीतमना दद्यादद्याद् भेषजं नरः ।
अश्रद्धया हि दत्तानि तान्यभोज्यानि भिक्षुभिः ॥
श्रद्धया यदुपादत्तं श्रद्धया चोपपादितम् ।
तस्योपभोगाद् धर्मः स्याद् व्याधिभिश्च निवर्त्यते ॥
आदेहपतनादेवं शुश्रूषेद् विधिपूर्वकम् ।
न त्वेव धर्ममुत्सृज्य कुर्यात् तेषां प्रतिक्रियाम् ॥
स्वभावतो हि द्वन्द्वानि विप्रयान्त्युपयान्ति च ।
स्वभावतः सर्वभावा भवन्ति न भवन्ति च ॥
सागरस्योर्मिसदृशा विज्ञातव्या गुणात्मकाः ।
विद्यादेवं हि यो धीमांस्तत्त्ववित् तत्त्वदर्शनः ॥
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ।
एवं प्रयतितव्यं हि शुश्रूषार्थमतन्द्रितैः ॥
सर्वाभिरुपसेवाभिस्तुष्यन्ति यतयो यथा ।
नापराध्येत भिक्षोस्तु न चैवमवधीरयेत् ॥
उत्तरं च न संदद्यात् क्रुद्धं चैव प्रसादयेत् ।
श्रेय एवाभिधातव्यं कर्तव्यं च प्रहृष्टवत् ॥
तूष्णीम्भावेन वै तत्र न क्रुद्धमभिसंवदेत् ।
लब्धालब्धेन जीवेत तथैव परिपोषयेत् ।
कोपिनं तु न याचेत ज्ञानविक्षेपकारितः ॥
स्थावरेषु दयां कुर्याज्जङ्गमेषु च प्राणिषु ।
यथाऽऽत्मनि तथान्येषु समां दृष्टिं निपातयेत् ॥
पुण्यतीर्थानुसेवी च नदीनां पुलिनाश्रयः ।
शून्यागारनिकेतश्च वनवृक्षगुहाशयः ॥
अरण्यानुचरो नित्यं वेदारण्यनिकेतनः ।
एकरात्रं द्विरात्रं वा न क्वचित् सज्जते द्विजः ॥
शीर्णपर्णपुटे वापि वन्ये चरति भिक्षुकः ।
न भोगार्थमनुप्रेत्य यात्रामात्रं समश्नुते ॥
धर्मलब्धं समश्नाति न कामान् किंचिदश्नुते ।
युगमात्रदृगध्वानं क्रोशादूर्ध्वं न गच्छति ॥
समो मानापमानाभ्यां समलोष्टाश्मकाञ्चनः ।
सर्वभूताभयकरस्तथैवाभयदक्षिणः ॥
निर्द्वन्द्वो निर्नमस्कारो निरानन्दपरिग्रहः ।
निर्ममो निरहङ्कारः सर्वभूतनिराश्रयः ॥
परिसंख्यानतत्त्वज्ञस्तथा सत्यपतिः सदा ।
ऊर्ध्वं नाधो न तिर्यक् च न किंचिदभिकामयत् ॥

एवं संचरमाणस्तु यतिधर्मं यथाविधि ।
कालस्य परिणामात् तु यथा पक्वफलं तथा ॥
स विसृज्य स्वकं देहं प्रविशेद् ब्रह्म शाश्वतम् ।
निरामयमनाद्यन्तं गुणसौम्यमचेतनम् ॥
निरक्षरमबीजं च निरिन्द्रियमजं तथा ।
अजय्यमक्षरं यत् तदभेद्यं सूक्ष्ममेव च ॥
निर्गुणं च प्रकृतिमन्निर्विकारं च सर्वशः ।
भूतभव्यभविष्यस्य कालस्य परमेश्वरम् ॥
अव्यक्तं पुरुषं क्षेत्रमानन्त्याय प्रपद्यते ।
एवं स भिक्षुर्निर्वाणं प्राप्नुयाद् दग्धकिल्बिषः ॥
इहस्थो देहमुत्सृज्य नीडं शकुनिवद् यथा ।
यत् करोति यदश्नाति शुभं वा यदि वाशुभम् ॥
नाकृतं भुज्यते कर्म न कृतं नश्यते फलम् ।
शुभकर्मसमाचारः शुभमेवाप्नुते फलम् ॥
तथाशुभसमाचारो ह्यशुभं समवाप्नुते ।
तथा शुभसमाचारो ह्यशुभानि विवर्जयेत् ॥
शुभान्येव समादद्याद् य इच्छेद् भूतिमात्मनः ।
तस्मादागमसम्पन्नो भवेत् सुनियतेन्द्रियः ॥
शक्यते ह्यागमादेव गतिं प्राप्तुमनामयाम् ।
परा चैषा गतिर्दृष्टा यामन्वेषन्ति साधवः ॥
यत्रामृतत्वं लभते त्यक्त्वा दुःखमनन्तकम् ।
इमं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ॥
स्त्रियो वैश्याश्च शूद्राश्च प्राप्नुयुः परमां गतिम् ।
किं पुनर्ब्राह्मणो विद्वान् क्षत्रियो वा बहुश्रुतः ॥
न चाप्यक्षीणपापस्य ज्ञानं भवति देहिनः ।
ज्ञानोपलब्धिर्भवति कृतकृत्यो यदा भवेत् ॥
उपलभ्य तु विज्ञानं ज्ञानं वाप्यनसूयकः ।
तथैव वर्तेद् गुरुषु भूयांसं वा समाहितः ॥
यथावमन्येत गुरुं तथा तेषु प्रवर्तते ।
व्यर्थमस्य श्रुतं भवति ज्ञानमज्ञानतां व्रजेत् ॥
गतिं चाप्यशुभां गच्छेन्निरयाय न संशयः ।
प्रक्षीयते तस्य पुण्यं ज्ञानमस्य विरुध्यते ॥
अदृष्टपूर्वकल्याणो यथादृष्टविधिर्नरः ॥
उत्सेकान्मोहमापद्य तत्त्वज्ञानं न चाप्नुयात् ।
एवमत्र हि नोत्सेकः कर्तव्यो ज्ञानसम्भवः ॥
फलं ज्ञानस्य हि शमः प्रशमाय यतेत् सदा ।
उपशान्तेन दान्तेन क्षमायुक्तेन सर्वदा ॥
शुश्रूषा प्रतिपत्तव्या नित्यमेवानसूयता ।
धृत्या शिश्नोदरं रक्षेत् पाणिपादं च चक्षुषा ॥
इन्द्रियार्थांश्च मनसा मनो बुद्धौ समादधेत् ।
धृत्याऽऽसीत ततो गत्वा शुद्धदेशं सुसंवृतम् ॥
लब्ध्वाऽऽसनं यथादृष्टं विधिपूर्वं समाचरेत् ।
ज्ञानयुक्तस्तथा देवं हृदिस्थमुपलक्षयेत् ॥

आदीप्यमानं वपुषा विधूममनलं यथा।
रश्मिमन्तमिवादित्यं वैद्युताग्निमिवाम्बरे ॥
संस्थितं हृदये पश्येदीशं शाश्वतमव्ययम्।
न चायुक्तेन शक्योऽयं द्रष्टुं देहे महेश्वरः ॥
युक्तस्तु पश्यते बुद्ध्या संनिवेश्य मनो हृदि।
अथ त्वेवं न शक्नोति कर्तुं हृदयधारणम् ॥
यथासांख्यमुपासीत यथावद् योगमास्थितः।
पञ्च बुद्धीन्द्रियाणीह पञ्च कर्मेन्द्रियाण्यपि ॥
पञ्च भूतविशेषाश्च मनश्चैव तु षोडश।
तन्मात्राण्यपि पञ्चैव मनोऽहङ्कार एव च ॥
अष्टमं चाप्यथाव्यक्तमेताः प्रकृतिसंज्ञिताः।
एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ॥
एवमेतदिहस्थेन विज्ञेयं तत्त्वबुद्धिना।
एवं वर्ष्म समुत्तीर्य तीर्णो भवति नान्यथा ॥
परिसंख्यानमेवैतन्मन्तव्यं ज्ञानबुद्धिना।
अहन्यहनि शान्तात्मा पावनाय हिताय च ॥
एवमेव प्रसंख्याय तत्त्वबुद्धिर्विमुच्यते।
निष्कलं केवलं भवति शुद्धतत्त्वार्थतत्त्ववित् ॥
सत्संनिकर्षे परिवर्तितव्यं
विद्याधिकाश्चापि निषेवितव्याः।
सवर्णतां गच्छति संनिकर्षा-
च्छीलः खगो मेरुमिवाश्रयन् वै ॥

*भीष्म उवाच*

इत्येवमाख्याय महामुनिस्तदा
चतुर्षु वर्णेषु विधानमर्थवित्।
शुश्रूषया वृत्तगतिं समाधिना
समाधियुक्तः प्रययौ स्वमाश्रमम् ॥

*युधिष्ठिर उवाच*

केषां देवा महाभागाः संनमन्ते महात्मनाम्।
लोकेऽस्मिंस्तानृषीन् सर्वाञ्श्रोतुमिच्छामि तत्त्वतः ॥

*भीष्म उवाच*

इतिहासमिमं विप्राः कीर्तयन्ति पुराविदः।
अस्मिन्नर्थे महाप्राज्ञास्तं निबोध युधिष्ठिर ॥
वृत्रं हत्वाप्युपावृत्तं त्रिदशानां पुरस्कृतम्।
महेन्द्रमनुसम्प्राप्तं स्तूयमानं महर्षिभिः ॥
श्रिया परमया युक्तं रथस्थं हरिवाहनम्।
मातलिः प्राञ्जलिर्भूत्वा देवमिन्द्रमुवाच ह ॥

*मातलिरुवाच*

नमस्कृतानां सर्वेषां भगवंस्त्वं पुरस्कृतः।
येषां लोके नमस्कुर्यात् तान् ब्रवीतु भवान् मम ॥

*भीष्म उवाच*

तस्य तद् वचनं श्रुत्वा देवराजः शचीपतिः।
यन्तारं परिपृच्छन्तं तमिन्द्रः प्रत्युवाच ह ॥

*इन्द्र उवाच*

धर्मं चार्थं च कामं च येषां चिन्तयतां मतिः।
नाधर्मे वर्तते नित्यं तान् नमस्यामि मातले ॥
ये रूपगुणसम्पन्नाः प्रमदाहृदयङ्गमाः।
निवृत्ताः कामभोगेषु तान् नमस्यामि मातले ॥
स्वेषु भोगेषु संतुष्टाः सुवाचो वचनक्षमाः।
अमानकामाश्चार्घ्यार्हास्तान् नमस्यामि मातले ॥
धनं विद्यास्तथैश्वर्यं येषां न चलयेन्मतिम्।
चलितां ये निगृह्णन्ति तान् नित्यं पूजयाम्यहम् ॥
इष्टैर्दारैरुपेतानां शुचीनामग्निहोत्रिणाम्।
चतुष्पादकुटुम्बानां मातले प्रणमाम्यहम् ॥
येषामर्थस्तथा कामो धर्ममूलविवर्धितः।
धर्मार्थौ यस्य नियतौ तान् नमस्यामि मातले ॥
धर्ममूलार्थकामानां ब्राह्मणानां गवामपि।
पतिव्रतानां नारीणां प्रणामं प्रकरोम्यहम् ॥
ये भुक्त्वा मानुषान् भोगान् पूर्वे वयसि मातले।
तपसा स्वर्गमायान्ति शश्वत् तान् पूजयाम्यहम् ॥
असम्भोगान्न चासक्तान् धर्मनित्याञ्जितेन्द्रियान्।
संन्यस्तानचलप्रख्यान् मनसा पूजयामि तान् ॥
ज्ञानप्रसन्नविद्यानां निरूढं धर्ममिच्छताम्।
परैः कीर्तितशौचानां मातले तान् नमाम्यहम् ॥

*युधिष्ठिर उवाच*

संस्कृतानां तटाकानां यत् फलं कुरुपुङ्गव।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥

*भीष्म उवाच*

सुप्रदर्शो धनपतिश्चित्रधातुविभूषितः।
त्रिषु लोकेषु सर्वत्र पूजितो यस्तटाकवान् ॥
इह चामुत्र सदनं पुत्रायं वित्तवर्धनम्।
कीर्तिसंजननं श्रेष्ठं तटाकानां निवेशनम् ॥
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः।
तटाकं सुकृतं देशे क्षेत्रे देशसमाश्रयम् ॥
चतुर्विधानां भूतानां तटाकमुपलक्षये।
तटाकानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥
देवा मनुष्या गन्धर्वाः पितरोरगराक्षसाः।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥
तस्मात्तांस्ते प्रवक्ष्यामि तटाके ये गुणाः स्मृताः।
या च तत्र फलप्राप्तिर्ऋषिभिः समुदाहृता ॥
वर्षमात्रं तटाके तु सलिलं यत्र तिष्ठति।
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ॥
निदाघकाले सलिलं तटाके यस्य तिष्ठति।
वाजपेयफलं तस्य फलं वै ऋषयोऽब्रुवन् ॥

सकुलं तारयेद् वंशं यस्य खाते जलाशये ।
गावः पिबन्ति पानीयं साधवश्च नराः सदा ॥
तटाके यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत् ॥
यत् पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तटाककर्तुस्तत् सर्वं प्रेत्यानन्त्याय कल्पते ॥
दुर्लभं सलिलं तात विशेषेण परंतप ।
पानीयस्य प्रदानेन सिद्धिर्भवति शाश्वती ॥
तिलान् ददत पानीयं दीपमन्नं प्रतिश्रयम् ।
बान्धवैः सह मोदध्वमेतत् प्रेतेषु दुर्लभम् ॥
सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद् दातव्यमेव हि ॥
एवमेतत् तटाकेषु कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामपि रोपणे ॥
स्थावराणां तु भूतानां जातयः षट् प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारतृणवीरुधः ॥
एता जात्यस्तु वृक्षाणामेषां रोपगुणास्त्विमे ।
पनसाम्रादयो वृक्षा गुल्मा मन्दारपूर्वकाः ॥
नागिकामलियावल्ल्यो मालतीत्यादिका लताः ।
वेणुक्रमुकत्वक्साराः सस्यानि तृणजातयः ॥
कीर्तिश्च मानुषे लोके प्रेत्य चैव शुभं फलम् ।
लभ्यते नाकपृष्ठे च पितृभिश्च महीयते ॥
देवलोकगतस्यापि नाम तस्य न नश्यति ।
अतीतानागतांश्चैव पितृवंशांश्च भारत ॥
तारयेद् वृक्षरोपी तु तस्माद् वृक्षान् प्ररोपयेत् ।
तस्य पुत्रा भवन्त्येव पादपा नात्र संशयः ॥
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ।
पुष्पैः सुरगणान् वृक्षाः फलैश्चापि तथा पितॄन् ॥
छायया चातिथींस्तात पूजयन्ति महीरुहाः ।
किंनरोरगरक्षांसि देवगन्धर्वमानवाः ॥
तथा ऋषिगणाश्चैव संश्रयन्ते महीरुहान् ।
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ॥
वृक्षदान् पुत्रवद् वृक्षाः तारयन्ति परत्र च ।
तस्मात् तटाके वृक्षा वै रोप्याः श्रेयोऽर्थिना सदा ॥
पुत्रवत् परिरक्ष्याश्च पुत्रास्ते धर्मतः स्मृताः ।
तटाककृद् वृक्षरोपी इष्टयज्ञश्च यो द्विजः ॥
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ।
तस्मात् तटाकं कुर्वीत आरामांश्चापि योजयेत् ॥
यजेच्च विविधैर्यज्ञैः सत्यं च विधिवद् वदेत् ।

इति श्रीमहाभारते अनुशासनपर्वणि दानधर्मपर्वणि छत्रोपानद्दानप्रशंसा नाम षण्णवतितमोऽध्यायः ॥ ९६ ॥

# सप्तनवतितमोऽध्यायः

## गार्हस्थ्ये पञ्चयज्ञकर्मणां विषये पृथिव्या सह भगवतः श्रीकृष्णस्य संवादः

*युधिष्ठिर उवाच*

गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ ।
ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव ॥ १ ॥

*भीष्म उवाच*

अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप ।
वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥ २ ॥
संस्तुत्य पृथिवीं देवीं वासुदेवः प्रतापवान् ।
पप्रच्छ भरतश्रेष्ठ मां त्वं यत् पृच्छसेऽद्य वै ॥ ३ ॥

*वासुदेव उवाच*

गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा ।
किमवश्यं धरे कार्यं किं वा कृत्वा कृतं भवेत् ॥ ४ ॥

*पृथिव्युवाच*

ऋषयः पितरो देवा मनुष्याश्चैव माधव ।
इज्याश्चैवार्चनीयाश्च यथा चैव निबोध मे ॥ ५ ॥
सदा यज्ञेन देवाश्च सदाऽऽतिथ्येन मानुषाः ।
छन्दतश्च यथा नित्यमर्हान् भुञ्जीत नित्यशः ॥ ६ ॥
तेन ह्यृषिगणाः प्रीता भवन्ति मधुसूदन ।
नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म च ॥ ७ ॥
कुर्यात् तथैव देवा वै प्रीयन्ते मधुसूदन ।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥ ८ ॥
पयोमूलफलैर्वापि पितॄणां प्रीतिमाहरन् ।
सिद्धान्नाद् वैश्वदेवं वै कुर्यादग्नौ यथाविधि ॥ ९ ॥
अग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम् ।
प्रजानां पतये चैव पृथग्घोमो विधीयते ॥ १० ॥
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् ।
दक्षिणायां यमायेति प्रतीच्यां वरुणाय च ॥ ११ ॥
सोमाय चाप्युदीच्यां वै वास्तुमध्ये प्रजापतेः ।
धन्वन्तरेः प्रागुदीच्यां प्राच्यां शक्राय माधव ॥ १२ ॥
मनुष्येभ्य इति प्राहुर्बलिं द्वारि गृहस्य वै ।
मरुद्भ्यो दैवतेभ्यश्च बलिमन्तर्गृहे हरेत् ॥ १३ ॥
तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत् ।
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं तथा हरेत् ॥ १४ ॥
एवं कृत्वा बलिं सम्यग् दद्याद् भिक्षां द्विजाय वै ।
अलाभे ब्राह्मणस्याग्नावग्रमुद्धृत्य निक्षिपेत् ॥ १५ ॥

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
श्रीमहेश्वर उवाच
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥
ये पुरा मनुजा देवि त्वासुरं भावमाश्रिताः ।
स्ववशाः कोपनपरा गुरुविद्वेषिणस्तथा ॥
परेषां दुःखजनका मनोवाक्कायकर्मभिः ।
छिन्दन् भिन्दंस्तुदन्नेव नित्यं प्राणिषु निर्दयाः ॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते तथाविधाः ॥
तत्र ते बहुभिर्घोरैस्तप्यन्ते व्याधिभिः प्रिये ॥
केचिच्च छर्दिसंयुक्ताः केचित्काससमन्विताः ।
ज्वरातिसारतृष्णाभिः पीड्यमानास्तथा परे ॥
पादगुल्मैश्च बहुभिः श्लेष्मदोषसमन्विताः ।
पादरोगैश्च विविधैर्व्रणकुष्ठभगन्दरैः ॥
आढ्या वा दुर्गता वापि दृश्यन्ते व्याधिपीडिताः ॥
एवमात्मकृतं कर्म भुञ्जते तत्र तत्र ते ।
ग्रहीतुं न च शक्यं हि केनचिद्व्यक्तं फलम् ॥
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥
उमोवाच
भगवन् देवदेवेश भूतपाल नमोऽस्तु ते ।
ह्रस्वाङ्गाश्चैव वक्राङ्गाः कुब्जा वामनकास्तथा ॥
अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
श्रीमहेश्वर उवाच
ये पुरा मनुजा देवि लोभमोहसमन्विताः ।
धान्यमानान् विकुर्वन्ति क्रयविक्रयकारणात् ॥
तुलादोषं तदा देवि धृतमानेषु नित्यशः ।
अर्धापकर्षणाच्चैव सर्वेषां क्रयविक्रये ॥
अङ्गदोषकरा ये तु परेषां कोपकारणात् ।
मांसादाश्चैव ये मूर्खा अयथावत्प्रथाः सदा ॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ह्रस्वाङ्गा वामनाश्चैव कुब्जाश्चैव भवन्ति ते ॥
उमोवाच
भगवन् मानुषाः केचिद् दृश्यन्ते मानुषेषु वै ।
उन्मत्ताश्च पिशाचाश्च पर्यटन्तो यतस्ततः ॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
श्रीमहेश्वर उवाच
ये पुरा मनुजा देवि दर्पाहङ्कारसंयुताः ।
बहुधा प्रलपन्त्येव हसन्ति च परान् भृशम् ॥
मोहयन्ति परान् भोगैर्मदनैर्लोभकारणात् ।
वृद्धान् गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ॥
शौण्डा विदग्धाः शास्त्रेषु तथैवानृतवादिनः ॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
उन्मत्ताश्च पिशाचाश्च भवन्त्येव न संशयः ॥
उमोवाच
भगवन् मानुषाः केचिन्निरपत्याः सुदुःखिताः ।
यतन्तो न लभन्त्येव अपत्यानि यतस्ततः ॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
श्रीमहेश्वर उवाच
ये पुरा मनुजा देवि सर्वप्राणिषु निर्दयाः ।
घ्नन्ति बालांश्च भुञ्जन्ते मृगाणां पक्षिणामपि ॥
गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयकाः ।
पितृपूजां न कुर्वन्ति यथोक्तां चाष्टकादिभिः ॥
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात् प्राप्य निरपत्या भवन्ति ते ।
पुत्रशोकयुताश्चापि नास्ति तत्र विचारणा ॥
उमोवाच
भगवन् मानुषाः केचित् प्रदृश्यन्ते सुदुःखिताः ।
उद्वेगवासनिरताः सोद्वेगाश्च यतव्रताः ॥
नित्यं शोकसमाविष्टा दुर्गताश्च तथैव च ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
श्रीमहेश्वर उवाच
ये पुरा मनुजा नित्यमुत्कोचनपरायणाः ।
भीषयन्ति परान् नित्यं विकुर्वन्ति तथैव च ॥
ऋणवृद्धिकराश्चैव दरिद्रेभ्यो यथेप्सतः ।
ये श्वभिः क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसां तथा देवि कुर्वन्ति च यतस्ततः ॥
येषां गृहेषु वै श्वानः त्रासयन्ति वृथा नरान् ॥
एवंयुक्तसमाचाराः कालधर्मगताः पुनः ।
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥
कथंचित् प्राप्य मानुष्यं तत्र ते दुःखसंयुताः ॥
कुदेशे दुःखभूयिष्ठे व्याघातशतसंकुले ।
जायन्ते तत्र शोचन्तः सोद्वेगाश्च यतस्ततः ॥
उमोवाच
भगवन् भगनेत्रघ्न मानुषेषु च केचन ।
क्लीबा नपुंसकाश्चैव दृश्यन्ते षण्डकास्तथा ॥
नीचकर्मरता नीचा नीचसख्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥
श्रीमहेश्वर उवाच
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपुंस्त्वोपघातेन जीवन्ति च रमन्ति च ॥
एवंयुक्तसमाचाराः कालधर्मं गतास्तु ते ॥
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥

यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः।
क्लीबा वर्षवराश्चैव षण्डकाश्च भवन्ति ते ॥
स्त्रीणामपि तथा देवि यथा पुंसां तु कर्मजम्।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥

[ उमामहेश्वरसंवादे विभिन्नमहत्त्वपूर्णविषयाणां विवेचनम् ]

*उमोवाच*

भगवन् देवदेवेश प्रमदा विधवा भृशम्।
दृश्यन्ते मानुषे लोके सर्वकल्याणवर्जिताः ॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि।

*श्रीमहेश्वर उवाच*

याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः।
कुटुम्बं तत्र वै पत्युर्नाशयन्ति वृथा तथा ॥
विषदाश्चाग्निदाश्चैव पतीन् प्रति सुनिर्दयाः।
अन्यासां हि पतीन् यान्ति स्वपतीन् द्वेष्यकारणात् ॥
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ॥
निरयस्थाश्चिरं कालं कथंचित् प्राप्य मानुषम् ॥
तत्र ता भोगरहिता विधवाश्च भवन्ति वै ॥

*उमोवाच*

भगवन् देवदेवेश मानुषेष्वेव केचन।
दासभूताः प्रदृश्यन्ते सर्वकर्मपरा भृशम् ॥
आघातभर्त्सनसहाः पीड्यमानाश्च सर्वशः।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥

*श्रीमहेश्वर उवाच*

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥
ये पुरा मनुजा देवि परेषां वित्तहारकाः ॥
ऋणवृद्धिकरं क्रौर्यान्न्यासदत्तं तथैव च।
निक्षेपकारणाद् दत्तपरद्रव्यापहारिणः ॥
प्रमादाद् विस्मृतं नष्टं परेषां धनहारकाः।
वधबन्धपरिक्लेशैर्दासत्वं कुर्वते परान् ॥
तादृशा मरणं प्राप्ता दण्डिता यमशासनैः।
कथंचित् प्राप्य मानुष्यं तत्र ते देवि सर्वथा ॥
दासभूता भविष्यन्ति जन्मप्रभृति मानवाः ॥
तेषां कर्माणि कुर्वन्ति येषां ते धनहारकाः।
आसमाप्तेः स्वपापस्य कुर्वन्तीति विनिश्चयः ॥
पशुभूतास्तथा चान्ये भवन्ति धनहारकाः।
तत् तथा क्षीयते कर्म तेषां पूर्वापराधजम् ॥
किंतु मोक्षविधिस्तेषां सर्वथा तत्प्रसादनम्।
अयथावन्मोक्षकामः पुनर्जन्मनि चेष्यते ॥
मोक्षकामी यथान्यायं कुर्वन् कर्माणि सर्वशः।
भर्तुः प्रसादमाकाङ्क्षेदायासान् सर्वथा सहन् ॥
प्रीतिपूर्वं तु यो भर्त्रा मुक्तो मुक्तः स पावनः।
तथाभूतान् कर्मकरान् सदा संतोषयेत् पतिः ॥

यथार्हं कारयेत् कर्म दण्डं कारणतः क्षिपेत्।
वृद्धान् बालांस्तथा क्षीणान् पालयन् धर्ममाप्नुयात् ॥
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥

*उमोवाच*

भगवन् भुवि मर्त्यानां दण्डितानां नरेश्वरैः।
दण्डेनैव कृतेनेह पापनाशो भवेन्न वा ॥
एतन्मया संशयितं तद् भवांश्छेत्तुमर्हति ॥

*श्रीमहेश्वर उवाच*

स्थाने संशयितं देवि शृणु तत्त्वं समाहिता ॥
ये नृपैर्दण्डिता भूमावपराधापदेशतः।
यमलोके न दण्ड्यन्ते तत्र ते यमदण्डनैः ॥
अदण्डिता वा ये तथ्या मिथ्या वा दण्डिता भुवि।
तान् यमो दण्डयत्येव स हि वेद कृताकृतम् ॥
नातिक्रमेद् यमं कश्चित् कर्म कृत्वेह मानुषः।
राजा यमश्च कुर्वाते दण्डमात्रं तु शोभने ॥
नास्ति कर्मफलच्छेत्ता कश्चिल्लोकत्रयेऽपि च।
इति ते कथितं सर्वं निर्विशङ्का भव प्रिये ॥

*उमोवाच*

किमर्थं दुष्कृतं कृत्वा मानुषा भुवि नित्यशः।
पुनस्तत्कर्मनाशाय प्रायश्चित्तानि कुर्वते ॥
सर्वपापहरं चेति हयमेधं वदन्ति च।
प्रायश्चित्तानि चान्यानि पापनाशाय कुर्वते ॥
तस्मान्मया संशयितं त्वं तच्छेत्तुमिहार्हसि।

*श्रीमहेश्वर उवाच*

स्थाने संशयितं देवि शृणु तत्त्वं समाहिता।
संशयो हि महानेव पूर्वेषां च मनीषिणाम् ॥
द्विधा तु क्रियते पापं सद्भिश्चासद्भिरेव च।
अभिसंधाय वा नित्यमन्यथा वा यदृच्छया ॥
केवलं चाभिसंधाय संरम्भाच्च करोति यत्।
कर्मणस्तस्य नाशस्तु न कथंचन विद्यते ॥
अभिसंधिकृतस्यैव नैव नाशोऽस्ति कर्मणः।
अश्वमेधसहस्रैश्च प्रायश्चित्तशतैरपि ॥
अन्यथा यत् कृतं पापं प्रमादाद् वा यदृच्छया।
प्रायश्चित्ताश्वमेधाभ्यां श्रेयसा तत् प्रणश्यति ॥
विद्ध्येवं पापके कार्ये निर्विशंका भव प्रिये।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥

*उमोवाच*

भगवन् देवदेवेश मानुषाश्चेतरा अपि।
म्रियन्ते मानुषा लोके कारणाकारणादपि ॥
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥

श्रीमहेश्वर उवाच

ये पुरा मनुजा देवि कारणाकारणादपि।
यथासुभिर्वियुज्यन्ते प्राणिनः प्राणिनिर्दयाः॥
तथैव ते प्राप्नुवन्ति यथैवात्मकृतं फलम्।
विषदास्तु विषेणैव शस्त्रैः शस्त्रेण घातकाः॥
इति सत्यं प्रजानीहि लोके तत्र विधिं प्रति।
कर्मकर्ता नरोऽभोक्ता स नास्ति दिवि वा भुवि।
न शक्यं कर्म चाभोक्तुं सदेवासुरमानुषैः॥
कर्मणा ग्रथितो लोक आदिप्रभृति वर्तते।
एतदुद्देशतः प्रोक्तं कर्मपाकफलं प्रति॥
यदन्यच्च मया नोक्तं यस्मिंस्ते कर्मसंग्रहे।
बुद्धितर्केण तत् सर्वं तथा वेदितुमर्हसि॥
कथितं श्रोतुकामाया भूयः श्रोतुं किमिच्छसि॥

उमोवाच

भगवन् भगनेत्रघ्न मानुषाणां विचेष्टितम्।
सर्वमात्मकृतं चेति श्रुतं मे भगवन्मतम्॥
लोके ग्रहकृतं सर्वं मत्वा कर्म शुभाशुभम्।
तदेव ग्रहनक्षत्रं प्रायशः पर्युपासते॥
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि।

श्रीमहेश्वर उवाच

स्थाने संशयितं देवि शृणु तत्त्वविनिश्चयम्॥
नक्षत्राणि ग्रहाश्चैव शुभाशुभनिवेदकाः।
मानवानां महाभागे न तु कर्मकराः स्वयम्॥
प्रजानां तु हितार्थाय शुभाशुभविधिं प्रति।
अनागतमतिक्रान्तं ज्योतिश्चक्रेण बोध्यते॥
किंतु तत्र शुभं कर्म सुग्रहैस्तु निवेद्यते।
दुष्कृतस्याशुभैरेव समवायो भवेदिति॥
केवलं ग्रहनक्षत्रं न करोति शुभाशुभम्।
सर्वमात्मकृतं कर्म लोकवादो ग्रहा इति॥

उमोवाच

भगवन् विविधं कर्म कृत्वा जन्तुः शुभाशुभम्।
किं तयोः पूर्वकतरं भुङ्क्ते जन्मान्तरे पुनः॥
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि।

श्रीमहेश्वर उवाच

स्थाने संशयितं देवि तत् ते वक्ष्यामि तत्त्वतः॥
अशुभं पूर्वमित्याहुरपरे शुभमित्यपि।
मिथ्या तदुभयं प्रोक्तं केवलं तद् ब्रवीमि ते॥
भुञ्जानाश्चापि दृश्यन्ते क्रमशो भुवि मानवाः।
ऋद्धिं हानिं सुखं दुःखं तत् सर्वमभयं भयम्॥
दुःखान्यनुभवन्त्याढ्या दरिद्राश्च सुखानि च।
यौगपद्याद्धि भुञ्जाना दृश्यन्ते लोकसाक्षिकम्॥
नरके स्वर्गलोके च न तथा संस्थितिः प्रिये।
नित्यं दुःखं हि नरके स्वर्गे नित्यं सुखं तथा॥
तत्रापि सुमहद् भुक्त्वा पूर्वमल्पं पुनः शुभे।
एतत् ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि॥

उमोवाच

भगवन् प्राणिनो लोके म्रियन्ते केन हेतुना।
जाता जाता न तिष्ठन्ति तन्मे शंसितुमर्हसि॥

श्रीमहेश्वर उवाच

तदहं ते प्रवक्ष्यामि शृणु सत्यं समाहिता।
आत्मा कर्मक्षयाद् देहं यथा मुञ्चति तच्छृणु॥
शरीरात्मसमाहारो जन्तुरित्यभिधीयते।
तत्रात्मानं नित्यमाहुरनित्यं क्षेत्रमुच्यते॥
एवं कालेन संक्रान्तं शरीरं जर्जरीकृतम्।
अकर्मयोग्यं संशीर्णं त्यक्त्वा देही ततो व्रजेत्॥
नित्यस्यानित्यसंत्यागाल्लोके तन्मरणं विदुः।
कालं नातिक्रमेरन् हि सदेवासुरमानवाः॥
यथाऽऽकाशे न तिष्ठेत द्रव्यं किंचिदचेतनम्।
तथा धावति कालोऽयं क्षणं किंचिन्न तिष्ठति॥
स पुनर्जायतेऽन्यत्र शरीरं नवमाविशन्।
एवं लोकगतिर्नित्यमादिप्रभृति वर्तते॥

उमोवाच

भगवन् प्राणिनो बाला दृश्यन्ते मरणं गताः।
अतिवृद्धाश्च जीवन्तो दृश्यन्ते चिरजीविनः॥
केवलं कालमरणं न प्रमाणं महेश्वर।
तस्मान्मे संशयं ब्रूहि प्राणिनां जीवकारणम्॥

श्रीमहेश्वर उवाच

शृणु तत् कारणं देवि निर्णयस्त्वेक एव सः।
यावत् पूर्वकृतं कर्म तावज्जीवति मानवः।
तत्र कर्मवशाद् बाला म्रियन्ते कालसंक्षयात्॥
चिरं जीवन्ति वृद्धाश्च तथा कर्मप्रमाणतः।
इति ते कथितं देवि निर्विशङ्का भव प्रिये॥

उमोवाच

भगवन् केन वृत्तेन भवन्ति चिरजीविनः।
अल्पायुषो नराः केन तन्मे शंसितुमर्हसि॥

श्रीमहेश्वर उवाच

शृणु तत् सर्वमखिलं गुह्यं पथ्यतरं नृणाम्।
येन वृत्तेन सम्पन्ना भवन्ति चिरजीविनः॥
अहिंसा सत्यवचनमक्रोधः क्षान्तिरार्जवम्।
गुरूणां नित्यशुश्रूषा वृद्धानामपि पूजनम्॥
शौचादकार्यसंत्यागः सदा पथ्यस्य भोजनम्।
एवमादिगुणं वृत्तं नराणां दीर्घजीविनाम्॥
तपसा ब्रह्मचर्येण रसायननिषेवणात्।
उदग्रसत्त्वा बलिनो भवन्ति चिरजीविनः॥

स्वर्गे वा मानुषे वापि चिरं तिष्ठन्ति धार्मिकाः ॥
अपरे पापकर्माणः प्रायशोऽनृतवादिनः ।
हिंसाप्रिया गुरुद्विष्टा निष्क्रियाः शौचवर्जिताः ॥
नास्तिका घोरकर्माणः सततं मांसपानपाः ।
पापाचारा गुरुद्विष्टाः कोपनाः कलहप्रियाः ॥
एवमेवाशुभाचारास्तिष्ठन्ति निरये चिरम् ।
तिर्यग्योनौ तथात्यन्तमल्पास्तिष्ठन्ति मानवाः ॥
तस्मादल्पायुषो मर्त्यास्तादृशाः सम्भवन्ति ते ॥
अगम्यदेशगमनादपथ्यानां च भोजनात् ।
आयुःक्षयो भवेन्नृणामायुःक्षयकरा हि ते ॥
भवन्त्यल्पायुषस्तैस्तैरन्यथा चिरजीविनः ।
एतत् ते कथितं सर्वं भूयः श्रोतुं किमिच्छसि ॥

उमोवाच

देवदेव महादेव श्रुतं मे भगवन्निदम् ।
आत्मनो जातिसम्बन्धं ब्रूहि स्त्रीपुरुषान्तरे ॥
स्त्रीप्राणः पुरुषप्राण एकः स पृथगेव वा ।
एष मे संशयो देव तं मे छेत्तुं त्वमर्हसि ॥

श्रीमहेश्वर उवाच

निर्विकारः सदैवात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि ।
कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते ॥
कृत्वा तु पौरुषं कर्म स्त्री पुमानपि जायते ।
स्त्रीभावयुक् पुमान् कृत्वा कर्मणा प्रमदा भवेत् ॥

उमोवाच

भगवन् सर्वलोकेश कर्मात्मा न करोति चेत् ।
कोऽन्यः कर्मकरो देहे तन्मे त्वं वक्तुमर्हसि ॥

श्रीमहेश्वर उवाच

शृणु भामिनि कर्तारमात्मा हि न च कर्मकृत् ।
प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यशः ॥
शरीरं प्राणिनां लोके यथा पित्तकफानिलैः ।
व्याप्तमेभिस्त्रिभिर्दोषैस्तथा व्याप्तं त्रिभिर्गुणैः ॥
सत्त्वं रजस्तमश्चैव गुणास्त्वेते शरीरिणः ।
प्रकाशात्मकमेतेषां सत्त्वं सततमिष्यते ॥
रजो दुःखात्मकं तत्र तमो मोहात्मकं स्मृतम् ।
त्रिभिरेतैर्गुणैर्युक्तं लोके कर्म प्रवर्तते ॥
सत्यं प्राणिदया शौचं श्रेयः प्रीतिः क्षमा दमः ।
एवमादि तथान्यच्च कर्म सात्त्विकमुच्यते ॥
दाक्ष्यं कर्मपरत्वं च लोभो मोहो विधिं प्रति ।
कलत्रसङ्गो माधुर्यं नित्यमैश्वर्यलुब्धता ॥
रजसश्चोद्भवं चैतत् कर्म नानाविधं सदा ॥
अनृतं चैव पारुष्यं धृतिर्विद्वेषिता भृशम् ।
हिंसासत्यं च नास्तिक्यं निद्रालस्यभयानि च ॥
तमसश्चोद्भवं चैतत् कर्म पापयुतं तथा ॥

तस्माद् गुणमयः सर्वः कार्यारम्भः शुभाशुभः ।
तस्मादात्मानमव्यग्रं विद्ध्यकर्तारमव्ययम् ॥
सात्त्विकाः पुण्यलोकेषु राजसा मानुषे पदे ।
तिर्यग्योनौ च नरके तिष्ठेयुस्तामसा नराः ॥

उमोवाच

किमर्थमात्मा भिन्नेऽस्मिन् देहे शस्त्रेण वा हते ।
स्वयं प्रयास्यति तदा तन्मे शंसितुमर्हसि ॥

श्रीमहेश्वर उवाच

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
एतन्नैर्मौपिकैश्चापि मुह्यन्ते सूक्ष्मबुद्धिभिः ॥
कर्मक्षये तु सम्प्राप्ते प्राणिनां जन्मधारिणाम् ।
उपद्रवो भवेद् देहे येन केनापि हेतुना ॥
तन्निमित्तं शरीरी तु शरीरं प्राप्य संक्षयम् ।
अपयाति परित्यज्य ततः कर्मवशेन सः ॥
देहः क्षयति नैवात्मा वेदनाभिर्न चाल्यते ।
तिष्ठेत् कर्मफलं यावद् व्रजेत् कर्मक्षये पुनः ॥
आदिप्रभृति लोकेऽस्मिन्नेवमात्मगतिः स्मृता ।
एतत् ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥

[ प्राणिनां चतुर्भेदनिरूपणम्, पूर्वजन्मस्मृतिरहस्यम्, मृतस्य प्रत्यावर्तने स्वप्नदर्शन हेतुत्वम्, दैवपुरुषार्थपुनर्जन्मनां विवेचनम् ]

उमोवाच

भगवन् देवदेवेश कर्मणैव शुभाशुभम् ।
यथायोगं फलं जन्तुः प्राप्नोतीति विनिश्चयः ॥
परेषां विप्रियं कुर्वन् यथा सम्प्राप्नुयाच्छुभम् ।
यदेतदस्मिश्चेद् देहे तन्मे शंसितुमर्हसि ॥

श्रीमहेश्वर उवाच

तदप्यस्ति महाभागे अभिसंधिबलान्नृणाम् ।
हितार्थं दुःखमन्येषां कृत्वा सुखमवाप्नुयात् ॥
दण्डयन् भर्त्सयन् राजा प्रजाः पुण्यमवाप्नुयात् ।
गुरुः संतर्जयञ्शिष्यान् भर्ता भृत्यजनान् स्वकान् ॥
उन्मार्गप्रतिपन्नांश्च शास्ता धर्मफलं लभेत् ॥
चिकित्सकश्च दुःखानि जनयन् हितमाप्नुयात् ।
एवमन्ये सुमनसो हिंसकाः स्वर्गमाप्नुयुः ॥
एकस्मिन् निहते भद्रे बहवः सुखमाप्नुयुः ।
तस्मिन् हते भवेद् धर्मः कुत एव तु पातकम् ॥
अभिसंधेरजिह्मत्वाच्छुद्धे धर्मस्य गौरवात् ।
एतत् कृत्वा तु पापेभ्यो न दोषं प्राप्नुयुः क्वचित् ॥

उमोवाच

चतुर्विधानां जन्तूनां कथं ज्ञानमिह स्मृतम् ।
कृत्रिमं तत्स्वभावं वा तन्मे शंसितुमर्हसि ॥

श्रीमहेश्वर उवाच

स्थावरं जङ्गमं चेति जगद् द्विविधमुच्यते।
चतस्रो योनयस्तत्र प्रजानां क्रमशो यथा॥
तेषामुद्भिदजा वृक्षा लतावल्ल्यश्च वीरुधः।
दंशयूकादयश्चान्ये स्वेदजाः कृमिजातयः॥
पक्षिणश्छिद्रकर्णाश्च प्राणिनस्त्वण्डजा मताः।
मृगव्यालमनुष्यांश्च विद्धि तेषां जरायुजान्॥
एवं चतुर्विधां जातिमात्मा संसृत्य तिष्ठति॥
तथा भूम्यम्बुसंयोगाद् भवन्त्युद्भिदजाः प्रिये।
शीतोष्णयोस्तु संयोगाज्जायन्ते स्वेदजाः प्रिये॥
अण्डजाश्चापि जायन्ते संयोगात् क्लेदबीजयोः।
शुक्रशोणितसंयोगात् सम्भवन्ति जरायुजाः॥
जरायुजानां सर्वेषां मानुषं पदमुत्तमम्॥
अतः परं तमोत्पत्तिं शृणु देवि समाहिता।
द्विविधं हि तमो लोके शार्वरं देहजं तथा॥
ज्योतिर्भिश्च तमो लोके नाशं गच्छति शार्वरम्।
देहजं तु तमो लोके तैः समस्तैर्न शाम्यति॥
तमसस्तस्य नाशार्थं नोपायमधिजग्मिवान्।
तपश्चचार विपुलं लोककर्ता पितामहः॥
चरतस्तु समुद्भूता वेदाः साङ्गाः सहोत्तराः।
ताँल्लब्ध्वा मुमुदे ब्रह्मा लोकानां हितकाम्यया॥
देहजं तत् तमो घोरं वेदैरेव विनाशितम्॥
कार्याकार्यमिदं चेति वाच्यावाच्यमिदं त्विति।
यदि चेन्न भवेल्लोके श्रुतं चारित्रदैशिकम्॥
पशुभिर्निर्विशेषं तु चेष्टन्ते मानुषा अपि॥
यज्ञादीनां समारम्भः श्रुतेनैव विधीयते।
यज्ञस्य फलयोगेन देवलोकः समृद्ध्यते॥
प्रीतियुक्ताः पुनर्देवा मानुषाणां भवन्त्युत।
एवं नित्यं प्रवर्धेते रोदसी च परस्परम्॥
लोकसंधारणं तस्माच्छ्रुतमित्यवधारय।
जन्तूनां नास्ति लोकत्रयेऽपि च॥
भवत्युत।
सम्प्रकाशते॥
बुद्धिजम्।
लाहकान्॥
महान्।
भवेत्॥
:।
॥
॥

ये मृताः सहसा मर्त्या जायन्ते सहसा पुनः।
तेषां पौराणिकोऽभ्यासः कंचित् कालं हि तिष्ठति॥
तस्माज्जातिस्मरा लोके जायन्ते बोधसंयुताः।
तेषां विवर्धतां संज्ञा स्वप्नवत् सा प्रणश्यति॥
परलोकस्य चास्तित्वे मूढानां कारणं त्विदम्॥

उमोवाच

भगवन् मानुषाः केचिन्मृता भूत्वापि सम्प्रति।
निवर्तमाना दृश्यन्ते देहेष्वेव पुनर्नराः॥

श्रीमहेश्वर उवाच

तदहं ते प्रवक्ष्यामि कारणं शृणु शोभने॥
प्राणैर्वियुज्यमानानां बहुत्वात् प्राणिनां क्षये।
तथैव नामसामान्याद् यमदूता नृणां प्रति॥
वहन्ति ते क्वचिन्मोहादन्यं मर्त्यं तु धार्मिकाः।
निर्विकारं हि तत् सर्वं यमो वेद कृताकृतम्॥
तस्मात् संयमनीं प्राप्य यमेनैकेन मोक्षिताः।
पुनरेवं निवर्तन्ते शेषं भोक्तुं स्वकर्मणः॥
स्वकर्मण्यसमाप्ते तु निवर्तन्ते हि मानवाः॥

उमोवाच

भगवन् सुप्तमात्रेण प्राणिनां स्वप्नदर्शनम्।
किं तत् स्वभावमन्यद् वा तन्मे शंसितुमर्हसि॥

श्रीमहेश्वर उवाच

सुप्तानां तु मनश्चेष्टा स्वप्न इत्यभिधीयते।
अनागतमतिक्रान्तं पश्यते संचरन्मनः॥
निमित्तं च भवेत् तस्मात् प्राणिनां स्वप्नदर्शनम्।
एतत् ते कथितं देवि भूयः श्रोतुं किमिच्छसि॥

उमोवाच

भगवन् सर्वभूतेश लोके कर्मक्रियापथे।
दैवात् प्रवर्तते सर्वमिति केचिद् व्यवस्थिताः॥
अपरे चेष्टया चेति दृष्ट्वा प्रत्यक्षतः क्रियाम्।
पक्षभेदे द्विधा चास्मिन् संशयस्थं मनो मम॥
तत्त्वं वद महादेव श्रोतुं कौतूहलं हि मे॥

श्रीमहेश्वर उवाच

तदहं ते प्रवक्ष्यामि शृणु तत्त्वं समाहिता।
लक्ष्यते द्विविधं कर्म मानुषेष्वेव तच्छृणु।
पुराकृतं तयोरेकमैहिकं त्वितरत् तथा॥
लौकिकं तु प्रवक्ष्यामि दैवमानुषनिर्मितम्।
कृषौ तु दृश्यते कर्म कर्षणं वपनं तथा॥
रोपणं चैव लवनं यच्चान्यत् पौरुषं स्मृतम्।
दैवादसिद्धिश्च भवेद् दुष्कृतं चास्ति पौरुषे॥
सुयत्नाल्लभ्यते कीर्तिर्दुर्यत्नादयशस्तथा।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते॥

रोपणं चैव लवनं यच्चान्यत् पौरुषं स्मृतम् ॥
काले वृष्टिः सुवापं च प्ररोहः पंक्तिरेव च ।
एवमादि तु यच्चान्यत् तद् दैवतमिति स्मृतम् ॥
पञ्चभूतस्थितिश्चैव ज्योतिषामयनं तथा ।
अबुद्धिगम्यं यन्मर्त्यैर्हेतुभिर्वा न विद्यते ॥
तादृशं कारणं दैवं शुभं वा यदि वेतरत् ।
यादृशं चात्मना शक्यं तत् पौरुषमिति स्मृतम् ॥
केवलं फलनिष्पत्तिरेकेन तु न शक्यते ।
पौरुषेणैव दैवेन युगपद् ग्रथितं प्रिये ॥
तयोः समाहितं कर्म शीतोष्णं युगपत् तथा ।
पौरुषं तु तयोः पूर्वमारब्धव्यं विजानता ॥
आत्मना तु न शक्यं हि तथा कीर्तिमवाप्नुयात् ॥
खननान्मथनाल्लोके जलाग्निप्रापणं तथा ।
तथा पुरुषकारे तु दैवसम्पत् समाहिता ॥
नरस्याकुर्वतः कर्म दैवसम्पन्न लभ्यते ।
तस्मात् सर्वसमारम्भो दैवमानुषनिर्मितः ॥

उमोवाच

भगवन् सर्वलोकेश लोकनाथ वृषध्वज ।
नास्त्यात्मा कर्मभोक्तेति मृतो जन्तुर्न जायते ॥
स्वभावाज्जायते सर्वं यथा वृक्षफलं तथा ।
यथोर्मयः सम्भवन्ति तथैव जगदाकृतिः ॥
तपोदानानि यत् कर्म तत्र तद् दृश्यते वृथा ।
नास्ति पौनर्भवं जन्म इति केचिद् व्यवस्थिताः ॥
परोक्षवचनं श्रुत्वा न प्रत्यक्षस्य दर्शनात् ।
तत् सर्वं नास्ति नास्तीति संशयस्थास्तथा परे ॥
पक्षभेदान्तरे चास्मिंस्तत्त्वं मे वक्तुमर्हसि ।
उक्तं भगवता यत् तु तत् तु लोकस्य संस्थितिः ॥

नारद उवाच

प्रश्नमेतत् तु पृच्छन्त्या रुद्राण्या परिषत् तदा ।
कौतूहलयुता श्रोतुं समाहितमनाभवत् ॥

श्रीमहेश्वर उवाच

नैतदस्ति महाभागे यद् वदन्तीह नास्तिकाः ।
एतदेवाभिशस्तानां श्रुतविद्वेषिणां मतम् ॥
सर्वमर्थं श्रुतं दृष्टं यत् प्रागुक्तं मया तव ।
तदाप्रभृति मर्त्यानां श्रुतमाश्रित्य पण्डिताः ॥
कामान् संछिद्य परिधान् धृत्वा वै परमासनाः ।
अभियान्त्येव ते स्वर्गं पश्यन्तः कर्मणः फलम् ॥
एवं श्रद्धाभवं लोके परतः सुमहत् फलम् ।
बुद्धिः श्रद्धा च विनयः करणानि हितैषिणाम् ॥
तस्मात् स्वर्गाभिगन्तारः कतिचित् त्वभवन् नराः ।
अन्ये करणहीनत्वान्नास्तिक्यं भावमाश्रिताः ॥
श्रुतविद्वेषिणो मूर्खा नास्तिकादृढनिश्चयाः ।
निष्क्रियास्तु निरन्नादाः पतन्त्येवाधमां गतिम् ॥
नास्त्यस्तीति पुनर्जन्म कवयोऽप्यत्र मोहिताः ।
नाधिगच्छन्ति तन्नित्यं हेतुवादशतैरपि ॥
एषा ब्रह्मकृता माया दुर्विज्ञेया सुरासुरैः ।
किं पुनर्मानवैर्लोके ज्ञातुकामैः कुबुद्धिभिः ॥
केवलं श्रद्धया देवि श्रुतिमात्रनिविष्टया ।
ततोऽस्तीत्येव मन्तव्यं तथा हितमवाप्नुयात् ॥
दैवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः ।
बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ॥
एतत् ते कथितं देवि ऋषिगुह्यं प्रजाहितम् ॥

[ यमलोकस्य तन्मार्गाणां च वर्णनम्, दुष्कर्मिणि नरकयातनानां कर्मानुसारेण विभिन्नयोनिषु तज्जन्मनां चोल्लेखः ]

उमोवाच

भगवन् सर्वलोकेश त्रिपुरार्दन शङ्कर ।
कीदृशा यमदण्डास्ते कीदृशाः परिचारकाः ॥
कथं मृतास्ते गच्छन्ति प्राणिनो यमसादनम् ।
कीदृशं भवनं तस्य कथं दण्डयति प्रजाः ॥
एतत् सर्वं महादेव श्रोतुमिच्छाम्यहं प्रभो ॥

श्रीमहेश्वर उवाच

शृणु कल्याणि तत् सर्वं यत् ते देवि मनःप्रियम् ।
दक्षिणस्यां दिशि शुभे यमस्य सदनं महत् ॥
विचित्रं रमणीयं च नानाभावसमन्वितम् ।
पितृभिः प्रेतसंघैश्च यमदूतैश्च संततम् ॥
प्राणिसंघैश्च बहुभिः कर्मवश्यैश्च पूरितम् ।
तत्रास्ते दण्डयन् नित्यं यमो लोकहिते रतः ॥
मायया सततं वेत्ति प्राणिनां यच्छुभाशुभम् ।
मायया संहरंस्तत्र प्राणिसंघान् यतस्ततः ॥
तस्य मायामयाः पाशा न वेद्यन्ते सुरासुरैः ।
को हि मानुषमात्रस्तु देवस्य चरितं महत् ॥
एवं संवसतस्तस्य यमस्य परिचारकाः ।
गृहीत्वा संनयन्त्येव प्राणिनः क्षीणकर्मणः ॥
येन केनापदेशेन त्वपदेशस्तदुद्भवः ।
कर्मणा प्राणिनो लोके उत्तमाधममध्यमाः ॥
यथार्हं तान् समादाय नयन्ति यमसादनम् ।
धार्मिकानुत्तमान् विद्धि स्वर्गिणस्ते यथामराः ॥
नृषु जन्म लभन्ते ये कर्मणा मध्यमाः स्मृताः ।
तिर्यङ्नरकगन्तारो ह्यधमास्ते नराधमाः ॥
पन्थानस्त्रिविधा दृष्टाः सर्वेषां गतजीविनाम् ।
रमणीयं निराबाधं दुर्दर्शमिति नामतः ॥
रमणीयं तु यन्मार्गं पताकाध्वजसंकुलम् ।
धूपितं सिक्तसम्मृष्टं पुष्पमालाभिसंकुलम् ॥

मनोहरं सुखस्पर्शं गच्छतामेव तद् भवेत् ।
निराबाधं यथालोकं सुप्रशस्तं कृतं भवेत् ॥
तृतीयं यत् तु दुर्दर्शं दुर्गन्धि तमसा वृतम् ।
परुषं शर्कराकीर्णं श्वदंष्ट्राबहुलं भृशम् ॥
कृमिकीटसमाकीर्णं भजतामतिदुर्गमम् ।
मार्गैरेवं त्रिभिर्नित्यमुत्तमाधममध्यमान् ॥
संनयन्ति यथा काले तन्मे शृणु शुचिस्मिते ।
उत्तमानन्तकाले तु यमदूताः सुसंवृताः ।
नयन्ति सुखमादाय रमणीयपथेन वै ॥
मध्यमान् योधवेषेण मध्यमेन पथा तथा ॥
चण्डालवेषास्त्वधमान् गृहीत्वा भर्त्सतर्जनैः ।
आकर्षन्तस्तथा पाशैर्दुर्दर्शेन नयन्ति तान् ॥
त्रिविधानेवमादाय नयन्ति यमसादनम् ॥
धर्मासनगतं दक्षं भ्राजमानं स्वतेजसा ।
लोकपालं सभाध्यक्षं तथैव परिपद्गतम् ॥
दर्शयन्ति महाभागे यामिकास्तं निवेद्य ते ।
पूजयन् दण्डयन् कांश्चित् तेषां शृण्वञ्शुभाशुभम् ।
व्यावृतो बहुसाहस्रैस्तत्रास्ते सततं यमः ॥
गतानां तु यमस्तेषामुत्तमानभिपूजयेत् ।
अभिसंगृह्य विधिवत् पृष्ट्वा स्वागतकौशलम् ॥
प्रस्तुत्य तत् कृतं तेषां लोकं संदिशते यमः ॥
यमेनैवमनुज्ञाता यान्ति पश्चात् त्रिविष्टपम् ॥
मध्यमानां यमस्तेषां श्रुत्वा कर्म यथातथम् ।
जायन्तां मानुषेष्वेव इति संदिशते च तान् ॥
अधमान् पाशसंयुक्तान् यमो नावेक्षते गतान् ।
यमस्य पुरुषा घोराश्चण्डालसमदर्शनाः ॥
यातनाः प्रापयन्त्येताँल्लोकपालस्य शासनात् ॥
भिन्दन्तश्च तुदन्तश्च प्रकर्षन्तो यतस्ततः ।
क्रोशन्तः पातयन्त्येतान् मिथो गर्तेष्ववाङ्मुखान् ॥
संयामिन्यः शिलाश्चैषां पतन्ति शिरसि प्रिये ।
अयोमुखाः कङ्कबला भक्षयन्ति सुदारुणाः ॥
असिपत्रवने घोरे चारयन्ति तथा परान् ।
तीक्ष्णदंष्ट्रास्तथा श्वानः कांश्चित् तत्र ह्यदन्ति वै ॥
तत्र वैतरणी नाम नदी ग्राहसमाकुला ।
दुष्प्रवेशा च घोरा च मूत्रशोणितवाहिनी ॥
तस्यां सम्मज्जयन्त्येते तृषितान् पाययन्ति तान् ।
आरोपयन्ति वै कांश्चित् तत्र कण्टकशाल्मलीम् ॥
यन्त्रचक्रेषु तिलवत् पीड्यन्ते तत्र केचन ।
अङ्गारेषु च दह्यन्ते तथा दुष्कृतकारिणः ॥
कुम्भीपाकेषु पच्यन्ते पच्यन्ते सिकतासु वै ।
पाट्यन्ते तरुवच्छस्त्रैः पापिनः क्रकचादिभिः ॥
भिद्यन्ते भागशः शूलैस्तुद्यन्ते सूक्ष्मसूचिभिः ॥
एवं त्वया कृतो दोषस्तदर्थं दण्डनं त्विति ।
वाचैवं घोषयन्ति स्म दण्डमानाः समन्ततः ॥
एवं ते यातनां प्राप्य शरीरैर्यातनाशयैः ।
प्रसहन्तश्च तद् दुःखं स्मरन्तः स्वापराधजम् ॥
क्रोशन्तश्च रुदन्तश्च न मुच्यन्ते कथंचन ।
स्मरन्तस्तत्र तप्यन्ते पापमात्मकृतं भृशम् ॥
एवं बहुविधा दण्डा भुज्यन्ते पापकारिभिः ।
यातनाभिश्च पच्यन्ते नरकेषु पुनः पुनः ॥
अपरे यातना भुक्त्वा मुच्यन्ते तत्र किल्बिषात् ॥
पापदोषक्षयकरा यातना संस्मृता नृणाम् ।
बहु तप्तं यथा लोहममलं तत् तथा भवेत् ॥

*उमोवाच*

भगवंस्ते कथं तत्र दण्ड्यन्ते नरकेषु वै ।
कति ते नरका घोराः कीदृशास्ते महेश्वर ॥

*श्रीमहेश्वर उवाच*

शृणु भामिनि तत् सर्वं पञ्चैते नरकाः स्मृताः ।
भूमेरधस्ताद् विहिता घोरा दुष्कृतकर्मणाम् ॥
प्रथमं रौरवं नाम शतयोजनमायतम् ।
तावत्प्रमाणविस्तीर्णं तामसं पापपीडितम् ॥
भृशं दुर्गन्धि परुषं कृमिभिर्दारुणैर्युतम् ।
अतिघोरमनिर्देश्यं प्रतिकूलं ततस्ततः ॥
ते चिरं तत्र तिष्ठन्ति न तत्र शयनासने ।
कृमिभिर्भक्ष्यमाणाश्च विष्ठागन्धसमायुताः ॥
एवं प्रमाणमुद्विग्ना यावत् तिष्ठन्ति तत्र ते ।
यातनाभ्यो दशगुणं नरके दुःखमिष्यते ॥
तत्र चात्यन्तिकं दुःखमिष्यते च शुभेक्षणे ।
क्रोशन्तश्च रुदन्तश्च वेदनास्तत्र भुञ्जते ॥
भ्रमन्ति दुःखमोक्षार्थं त्राता कश्चिन्न विद्यते ।
दुःखस्यान्तरमात्रं तु स्थानं वा न च लभ्यते ॥
महारौरवसंज्ञं तु द्वितीयं नरकं प्रिये ।
तस्माद् द्विगुणितं विद्धि माने दुःखे च रौरवात् ॥
तृतीयं नरकं तत्र कण्टकावनसंज्ञितम् ।
ततो द्विगुणितं तच्च पूर्वाभ्यां दुःखमानयोः ॥
महापातकसंयुक्ता घोरास्तस्मिन् विशन्ति हि ॥
अग्निकुण्डमिति ख्यातं चतुर्थं नरकं प्रिये ।
एतद् द्विगुणितं तस्माद् यथानिष्टसुखं तथा ॥
ततो दुःखं हि सुमहदमानुषमिति स्मृतम् ।
भुञ्जते तत्र तत्रैव दुःखं दुष्कृतकारिणः ॥
पञ्चकष्टमिति ख्यातं नरकं पञ्चमं प्रिये ।
तत्र दुःखमनिर्देश्यं महाघोरं यथातथम् ॥
पञ्चेन्द्रियैरसह्यत्वात् पञ्चकष्टमिति स्मृतम् ।
भुञ्जते तत्र तत्रैवं दुःखं दुष्कृतकारिणः ॥
अमानुषार्हजं दुःखं महाभूतैश्च भुज्यते ।
अतिघोरं चिरं कृत्वा महाभूतानि यान्ति तम् ॥

पञ्चकष्टेन हि समं नास्ति दुःखं तथा परम्।
दुःखस्थानमिति प्राहुः पञ्चकष्टमिति प्रिये॥
एवं त्वेतेषु तिष्ठन्ति प्राणिनो दुःखभागिनः।
अन्ये च नरकाः सन्त्यवीचिप्रमुखाः प्रिये॥
क्रोशन्तश्च रुदन्तश्च वेदनार्ता भृशातुराः।
केचिद् भ्रमन्तश्चेष्टन्ते केचिद् धावन्ति चातुराः॥
आधावन्तो निवार्यन्ते शूलहस्तैर्यतस्ततः।
क्षुधार्दितास्तृषायुक्ताः प्राणिनः पापकारिणः॥
यावत् पूर्वकृतं तावन्न मुच्यन्ते कथंचन।
कृमिभिर्भक्ष्यमाणाश्च वेदनार्तास्तृषान्विताः॥
संस्मरन्तः स्वकं पापं कृतमात्मापराधजम्।
शोचन्तस्तत्र तिष्ठन्ति यावत् पापक्षयं प्रिये॥
एवं भुक्त्वा तु नरकं मुच्यन्ते पापसंक्षयात्॥

उमोवाच

भगवन् कति कालं ते तिष्ठन्ति नरकेषु वै।
एतद् वेदितुमिच्छामि तन्मे ब्रूहि महेश्वर॥

श्रीमहेश्वर उवाच

शतवर्षसहस्राणामादिं कृत्वा हि जन्तवः।
तिष्ठन्ति नरकावासाः प्रलयान्तमिति स्थितिः॥

उमोवाच

भगवंस्तेषु के तत्र तिष्ठन्तीति वद प्रभो॥

श्रीमहेश्वर उवाच

रौरवे शतसाहस्रं वर्षाणामिति संस्थितिः।
मातृघ्नाः कृतघ्नाश्च तथैवानृतवादिनः॥
द्वितीये द्विगुणं कालं पच्यन्ते तादृशा नराः।
महापातकयुक्तास्तु तृतीये दुःखमाप्नुयुः॥
चतुर्थे परितप्यन्ते यावद् युगविपर्ययः॥
सहन्तस्तादृशं घोरं पञ्चकष्टे तु यादृशम्।
तत्रास्य चिरदुःखस्य ह्यधोऽन्यान् विद्धि मानुषान्॥
एवं ते नरकान् भुक्त्वा तत्र क्षपितकल्मषाः।
नरकेभ्यो विमुक्ताश्च जायन्ते कृमिजातिषु॥
उद्भेदजेषु वा केचित्तत्रापि क्षीणकल्मषाः।
पुनरेव प्रजायन्ते मृगपक्षिषु शोभने॥
मृगपक्षिषु तद् भुक्त्वा लभन्ते मानुषं पदम्॥

उमोवाच

नानाजातिषु केनैव जायन्ते पापकारिणः॥

श्रीमहेश्वर उवाच

तदहं ते प्रवक्ष्यामि यत् त्वमिच्छसि शोभने।
सर्वदाऽऽत्मा कर्मवशो नानाजातिषु जायते॥
तथ्य मांसप्रियो नित्यं काकगृध्रान् स संस्पृशेत्।
सुरापः सततं मर्त्यः सूकरत्वं व्रजेद् ध्रुवम्॥
अभक्ष्यभक्षणो मर्त्यः काकजातिषु जायते।
आत्मघ्नो यो नरः कोपात् प्रेतजातिषु तिष्ठति॥
पैशुन्यात् परिवादाच्च कुक्कुटत्वमवाप्नुयात्।
नास्तिकश्चैव यो मूर्खो मृगजातिं स गच्छति॥
हिंसाविहारस्तु नरः कृमिकीटेषु जायते।
अतिमानयुतो नित्यं प्रेत्य गर्दभतां व्रजेत्॥
अगम्यागमनाच्चैव परदारनिषेवणात्।
मूषिकत्वं व्रजेन्मर्त्यो नास्ति तत्र विचारणा॥
कृतघ्नो मित्रघाती च शृगालवृकजातिषु।
कृतघ्नः पुत्रघाती च स्थावरेष्वथ तिष्ठति॥
एवमाद्यशुभं कृत्वा नरा निरयगामिनः।
तां तां योनिं प्रपद्यन्ते स्वकृतस्यैव कारणात्॥
एवं जातिषु निर्दिश्याः प्राणिनः पापकारिणः।
कथंचित् पुनरुत्पद्य लभन्ते मानुषं पदम्॥
बहुशश्चाग्निसंक्रान्तं लोहं शुचिमयं यथा।
बहुदुःखाभिसंतप्तस्तथाऽऽत्मा शोध्यते बलात्॥
तस्मात् सुदुर्लभं चेति विद्धि जन्मस्तु मानुषम्॥

[ शुभाशुभमानसादित्रिविधकर्मणां स्वरूपफलयोर्मद्यसेवनदोषस्य च वर्णनम्, आहारशुद्धेर्मांसभक्षणदोषस्य मांसाभक्षणे लाभस्य जीवदयामहत्त्वस्य गुरुपूजाविधेरुपवासविधेर्ब्रह्मचर्यपालनस्य तीर्थचर्यायाः सर्वसाधारणद्रव्यदानपुण्यस्यान्नसुवर्णगोभूमिकन्याविद्यादानमाहात्म्यस्य पुण्यतमदेशकालयोर्दत्तदानस्य धर्मस्य च निष्फलताया विविधदानस्य लौकिकवैदिकयज्ञस्य देवपूजायाश्च निरूपणम्। ]

उमोवाच

श्रोतुं भूयोऽहमिच्छामि प्रजानां हितकारणात्।
शुभाशुभमिति प्रोक्तं कर्म स्वं स्वं समासतः॥

श्रीमहेश्वर उवाच

तदहं ते प्रवक्ष्यामि तत् सर्वं शृणु शोभने।
सुकृतं दुष्कृतं चेति द्विविधं कर्मविस्तरम्॥
तयोर्यद् दुष्कृतं कर्म तच्च संजायते त्रिधा।
मनसा कर्मणा वाचा बुद्धिमोहसमुद्भवात्॥
मनःपूर्वं तु वा कर्म वर्तते वाङ्मयं ततः।
जायते वै क्रियायोगमनु चेष्टाक्रमः प्रिये॥
अभिद्रोहोऽभ्यसूया च परार्थेषु च स्पृहा।
धर्मकार्ये यदाश्रद्धा पापकर्मणि हर्षणम्॥
एवमाद्यशुभं कर्म मनसा पापमुच्यते।
अनृतं यच्च परुषमबद्धं यच्च शंकरि।
असत्यं परिवादश्च पापमेतत् तु वाङ्मयम्॥
अगम्यागमनं चैव परदारनिषेवणम्।
वधबन्धपरिक्लेशैः परप्राणोपतापनम्॥
चौर्यं परेषां द्रव्याणां हरणं नाशनं तथा।
अभक्ष्यभक्षणं चैव व्यसनेष्वभिषङ्गता॥

दर्पात् स्तम्भाभिमानाच्च परेषामुपतापनम् ।
अकार्याणां च करणमशौचं पानसेवनम् ॥
दौःशील्यं पापसम्पर्कं साहाय्यं पापकर्मणि ।
अधर्म्यमयशस्यं च कार्यं तस्य निषेवणम् ॥
एवमाद्यशुभं चान्यच्छारीरं पापमुच्यते ॥
मानसाद् वाङ्मयं पापं विशिष्टमिति लक्ष्यते ।
वाङ्मयादपि वै पापाच्छारीरं गण्यते बहु ॥
एवं पापयुतं कर्म त्रिविधं पातयेन्नरम् ।
परोपतापजननमत्यन्तं पातकं स्मृतम् ॥
त्रिविधं तत् कृतं पापं कर्तारं पापकं नयेत् ।
पातकं चापि यत् कर्म कर्मणा बुद्धिपूर्वकम् ॥
सापदेशमवश्यं तु कर्तव्यमिति तत् कृतम् ।
कथंचित् तत् कृतमपि कर्ता तेन न लिप्यते ॥

उमोवाच

भगवन् पापकं कर्म यथा कृत्वा न लिप्यते ॥

श्रीमहेश्वर उवाच

यो नरोऽनपराधी च स्वात्मप्राणस्य रक्षणात् ।
शत्रुमुद्यतशस्त्रं वा पूर्वं तेन हतोऽपि वा ॥
प्रतिहन्यान्नरो हिंस्रान्न स पापेन लिप्यते ।
चोरादधिकसंत्रस्तस्तत्प्रतीकारचेष्टया ।
यः प्रजघ्नन् नरो हन्यान्न स पापेन लिप्यते ॥
ग्रामार्थे भर्तृपिण्डार्थे दीनानुग्रहकारणात् ।
वधबन्धपरिक्लेशान् कुर्वन् पापात् प्रमुच्यते ॥
दुर्भिक्षे चात्मवृत्त्यर्थमेकायनगतस्तथा ।
अकार्यं वाप्यभक्ष्यं वा कृत्वा पापान्न लिप्यते॥
केचिद्धसन्ति तत् पीत्वा प्रवदन्ति तथा परे ।
नृत्यन्ति मुदिताः केचिद् गायन्ति च शुभाशुभान्॥
कलिं ते कुर्वतेऽभीष्टं प्रहरन्ति परस्परम् ।
क्वचिद् धावन्ति सहसा प्रस्खलन्ति पतन्ति च ॥
अयुक्तं बहु भाषन्ते यत्र क्वचन शोभने ।
नग्ना विक्षिप्य गात्राणि नष्टज्ञाना इवासते ॥
एवं बहुविधान् भावान् कुर्वन्ति भ्रान्तचेतनाः ।
ये पिबन्ति महामोहं पानं पापयुता नराः ॥
धृतिं लज्जां च बुद्धिं च पानं पीतं प्रणाशयेत् ।
तस्मान्नराः सम्भवन्ति निर्लज्जा निरपत्रपाः ॥
पानपस्तु सुरां पीत्वा तदा बुद्धिप्रणाशनात् ।
कार्याकार्यस्य चाज्ञानाद् यथेष्टकरणात् स्वयम् ॥
विदुषामविधेयत्वात् पापमेवाभिपद्यते ॥
परिभूतो भवेल्लोके मद्यपो मित्रभेदकः ।
सर्वकालमशुद्धश्च सर्वभक्षस्तथा भवेत् ॥
विनष्टो ज्ञानविद्वद्भ्यः सततं कलिभावगः ।
परुषं कटुकं घोरं वाक्यं वदति सर्वशः ॥
गुरूनतिवदेन्मत्तः परदारान् प्रधर्षयेत् ।
संविदं कुरुते शौण्डैर्न शृणोति हितं क्वचित् ॥
एवं बहुविधा दोषाः पानपे सन्ति शोभने ।
केवलं नरकं यान्ति नास्ति तत्र विचारणा ॥
तस्मात् तद् वर्जितं सद्भिः पानमात्महितैषिभिः।
यदि पानं न वर्जेरन् सन्तश्चारित्रकारणात् ।
भवेदेतज्जगत् सर्वममर्यादं च निष्क्रियम् ॥
तस्माद् बुद्धेर्हि रक्षार्थं सद्भिः पानं विवर्जितम् ।
विधानं सुकृतस्यापि भूयः शृणु शुचिस्मिते ।
प्रोच्यते तत् त्रिधा देवि सुकृतं च समासतः ॥
त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया ।
स हि प्राप्नोति सकलं सर्वदुष्कृतवर्जनात् ॥
प्रथमं वर्जयेद् दोषान् युगपत् पृथगेव वा ।
तथा धर्ममवाप्नोति दोषत्यागो हि दुष्करः ॥
दोषसाकल्यसंत्यागान्मुनिर्भवति मानवः ॥
सौकर्यं पश्य धर्मस्य कार्यारम्भाहतेऽपि च ।
आत्मोपलब्धोपरमाल्लभन्ते सुकृतं परम् ॥
अहो नृशंसाः पच्यन्ते मानुषाः स्वल्पबुद्धयः ।
ये तादृशं न बुध्यन्ते आत्माधीनं च निर्वृताः ॥
दुष्कृतत्यागमात्रेण पदमूर्ध्वं हि लभ्यते ॥
पापभीरुत्वमात्रेण दोषाणां परिवर्जनात् ।
सुशोभनो भवेद् देवि ऋजुर्धर्मव्यपेक्षया ॥
श्रुत्वा च वृद्धसंयोगादिन्द्रियाणां च निग्रहात् ।
संतोषाच्च धृतेश्चैव शक्यते दोषवर्जनम् ॥
तदेव धर्ममित्याहुर्दोषसंयमनं प्रिये ।
यमधर्मेण धर्मोऽस्ति नान्यः शुभतरः प्रिये ॥
यमधर्मेण यतयः प्राप्नुवन्त्युत्तमां गतिम् ॥
ईश्वराणां प्रभवतां दरिद्राणां च वै नृणाम् ।
सफलो दोषसंत्यागो दानादपि शुभादपि ॥
तपो दानं महादेवि दोषमल्पं हि निर्हरेत् ।
सुकृतं यामिकं चोक्तं वक्ष्ये निरुपसाधनम् ॥
सुखाभिसंधिर्लोकानां सत्यं शौचमथार्जवम् ।
व्रतोपवासः प्रीतिश्च ब्रह्मचर्यं दमः शमः ॥
एवमादि शुभं कर्म सुकृतं नियमाश्रितम् ।
शृणु तेषां विशेषांश्च कीर्तयिष्यामि भामिनि ॥
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
नास्ति सत्यात् परं दानं नास्ति सत्यात् परं तपः ॥
यथा श्रुतं यथा दृष्टमात्मना यद् यथा कृतम् ।
तथा तस्याविकारेण वचनं सत्यलक्षणम् ॥
यच्छलेनाभिसंयुक्तं सत्यरूपं मृषैव तत् ।
सत्यमेव प्रवक्तव्यं पारावर्यं विजानता ॥
दीर्घायुश्च भवेत् सत्यात् कुलसंतानपालकः ।
लोकसंस्थितिपालश्च भवेत् सत्येन मानवः ॥

उमोवाच

कथं संधारयन् मर्त्यो व्रतं शुभमवाप्नुयात् ॥

श्रीमहेश्वर उवाच

पूर्वमुक्तं तु यत् पापं मनोवाक्कायकर्मभिः ।
व्रतवत् तस्य संत्यागस्तपोव्रतमिति स्मृतम् ॥
शुद्धकायो नरो भूत्वा स्नात्वा तीर्थे यथाविधि ।
पञ्चभूतानि चन्द्रार्कौ संध्ये धर्मयमौ पितॄन् ॥
आत्मनैव तथाऽऽत्मानं निवेद्य व्रतवच्चरेत् ।
व्रतमामरणाद् वापि कालच्छेदेन वा हरेत् ॥
शाकादिषु व्रतं कुर्यात् तथा पुष्पफलादिषु ।
ब्रह्मचर्यव्रतं कुर्यादुपवासव्रतं तथा ॥
एवमन्येषु बहुषु व्रतं कार्यं हितैषिणा ।
व्रतभङ्गो यथा न स्याद् रक्षितव्यं तथा बुधैः ॥
व्रतभङ्गे महत् पापमिति विद्धि शुभेक्षणे ॥
औषधार्थे यदज्ञानाद् गुरूणां वचनादपि ।
अनुग्रहार्थं बन्धूनां व्रतभङ्गो न दुष्यते ॥
व्रतापवर्गकाले तु दैवब्राह्मणपूजनम् ।
नरेण तु यथावद्धि कार्यसिद्धिं यथाप्नुयात् ॥

उमोवाच

कथं शौचविधिस्तत्र तन्मे शंसितुमर्हसि ॥

श्रीमहेश्वर उवाच

बाह्यमाभ्यन्तरं चेति द्विविधं शौचमिष्यते ।
मानसं सुकृतं यत् तच्छौचमाभ्यन्तरं स्मृतम् ॥
सदाऽऽहारविशुद्धिश्च कायप्रक्षालनं तु यत् ।
बाह्यशौचं भवेदेतत् तथैवाचमनादिना ॥
मृच्चैव शुद्धदेशस्था गोशकृन्मूत्रमेव च ।
द्रव्याणि गन्धयुक्तानि यानि पुष्टिकराणि च ॥
एतैः सम्मार्जनैः कायमम्भसा च पुनः पुनः ।
अक्षोभ्यं यत् प्रकीर्णं च नित्यस्रोतश्च यज्जलम् ॥
प्रायशस्तादृशे मज्जेदन्यथा च विवर्जयेत् ॥
त्रिस्त्रिराचमनं श्रेष्ठं निर्मलैरुद्धृतैर्जलैः ।
तथा विण्मूत्रयोः शुद्धिरद्भिर्बहुमृदा भवेत् ॥
तथैव जलसंशुद्धिर्यत् संशुद्धं तु संस्पृशेत् ॥
शकृता भूमिशुद्धिः स्याल्लोहानां भस्मना स्मृतम् ।
तक्षणं घर्षणं चैव दारवाणां विशोधनम् ॥
दहनं मृण्मयानां च मर्त्यानां कृच्छ्रधारणम् ।
शेषाणां देवि सर्वेषामातपेन जलेन च ॥
ब्राह्मणानां च वाक्येन सदा संशोधनं भवेत् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।
एवमापदि संशुद्धिरेवं शौचं विधीयते ॥

उमोवाच

आहारशुद्धिस्तु कथं देवदेव महेश्वर ॥

श्रीमहेश्वर उवाच

अमांसमद्यमक्लेद्यमपर्युषितमेव च ।
अतिकट्वम्ललवणहीनं च शुभगन्धि च ॥
कृमिकेशमलैर्हीनं संवृतं शुद्धदर्शनम् ।
एवंविधं सदाऽऽहार्यं देवब्राह्मणसत्कृतम् ॥
श्रेष्ठमित्येव तज्ज्ञेयमन्यथा मन्यतेऽशुभम् ।
ग्राम्यादारण्यकैः सिद्धं श्रेष्ठमित्यवधारय ॥
अतिमात्रगृहीतात् तु अल्पदत्तं भवेच्छुचि ।
यज्ञशेषं हविःशेषं पितृशेषं च निर्मलम् ॥
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥

उमोवाच

भक्षयन्त्यपरे मांसं वर्जयन्त्यपरे विभो ।
तन्मे वद महादेव भक्ष्याभक्ष्यविनिर्णयम् ॥

श्रीमहेश्वर उवाच

मांसस्य भक्षणे दोषो यश्चास्याभक्षणे गुणः ।
तदहं कीर्तयिष्यामि तन्निबोध यथातथम् ॥
इष्टं दत्तमधीतं च क्रतवश्च सदक्षिणाः ।
अमांसभक्षणस्यैव कलां नार्हन्ति षोडशीम् ॥
आत्मार्थं यः परप्राणान् हिंस्यात् स्वादुफलेप्सया ।
व्याघ्रगृध्रशृगालैश्च राक्षसैश्च समस्तु सः ॥
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नवासं लभते यत्र यत्रोपजायते ॥
संछेदनं स्वमांसस्य यथा संजनयेद् रुजम् ।
तथैव परमांसेऽपि वेदितव्यं विजानता ॥
यस्तु सर्वाणि मांसानि यावज्जीवं न भक्षयेत् ।
स स्वर्गे विपुलं स्थानं लभते नात्र संशयः ॥
यत् तु वर्षशतं पूर्णं तप्यते परमं तपः ।
यच्चापि वर्जयेन्मांसं सममेतन्न वा समम् ॥
न हि प्राणैः प्रियतमं लोके किंचन विद्यते ।
तस्मात् प्राणिदया कार्या यथाऽऽत्मनि तथा परे ॥
इत्येवं मुनयः प्राहुर्मांसस्याभक्षणे गुणान् ।

उमोवाच

गुरुपूजा कथं देव क्रियते धर्मचारिभिः ॥

श्रीमहेश्वर उवाच

गुरुपूजां प्रवक्ष्यामि यथावत् तव शोभने ।
कृतज्ञानां परो धर्म इति वेदानुशासनम् ॥
तस्मात् स्वगुरवः पूज्यास्ते हि पूर्वोपकारिणः ।
गुरूणां च गरीयांसस्त्रयो लोकेषु पूजिताः ॥
उपाध्यायः पिता माता सम्पूज्यास्ते विशेषतः ।
ये पितुर्भ्रातरो ज्येष्ठा ये च तस्यानुजास्तथा ॥
पितुः पिता च सर्वे ते पूजनीयाः पिता तथा ॥
मातुर्या भगिनी ज्येष्ठा मातुर्या च यवीयसी ।

मातामही च धात्री च सर्वास्ता मातरः स्मृताः ॥
उपाध्यायस्य यः पुत्रो यश्च तस्य भवेद् गुरुः ।
ऋत्विग् गुरुः पिता चेति गुरवः सम्प्रकीर्तिताः ॥
ज्येष्ठो भ्राता नरेन्द्रश्च मातुलः श्वशुरस्तथा ।
भयत्राता च भर्ता च गुरवस्ते प्रकीर्तिताः ॥
इत्येष कथितः साध्वि गुरूणां सर्वसंग्रहः ।
अनुवृत्तिं च पूजां च तेषामपि निबोध मे ॥
आराध्या मातापितरावुपाध्यायस्तथैव च ।
कथंचिन्नावमन्तव्या नरेण हितमिच्छता ॥
तेन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।
येन प्रीणाति चेन्माता प्रीताः स्युर्देवमातरः ॥
येन प्रीणात्युपाध्यायो ब्रह्मा तेनाभिपूजितः ।
अप्रीतेषु पुनस्तेषु नरो नरकमेति हि ॥
गुरूणां वैरनिर्बन्धो न कर्तव्यः कथंचन ।
नरकं स्वगुरुप्रीत्या मनसापि न गच्छति ॥
न ब्रूयाद् विप्रियं तेषामनिष्टं न प्रवर्तयेत् ।
विगृह्य न वदेत् तेषां समीपे स्पर्धया क्वचित् ॥
यद् यदिच्छन्ति ते कर्तुमस्वतन्त्रस्तदाचरेत् ।
वेदानुशासनसमं गुरुशासनमिष्यते ॥
कलहांश्च विवादांश्च गुरुभिः सह वर्जयेत् ।
कैतवं परिहासांश्च मन्युकामाश्रयांस्तथा ॥
गुरूणां योऽनहंवादी करोत्याज्ञामतन्द्रितः ।
न तस्मात् सर्वमर्त्येषु विद्यते पुण्यकृत्तमः ॥
असूयामपवादं च गुरूणां परिवर्जयेत् ।
तेषां प्रियहितान्वेषी भूत्वा परिचरेत् सदा ॥
न तद् यज्ञफलं कुर्यात् तपो वाऽऽचरितं महत् ।
यत् कुर्यात् पुरुषस्येह गुरुपूजा सदा कृता ॥
अनुवृत्तेर्विना धर्मो नास्ति सर्वाश्रमेष्वपि ।
तस्मात् क्षमावृतः क्षान्तो गुरुवृत्तिं समाचरेत् ॥
स्वमर्थं स्वशरीरं च गुर्वर्थे संत्यजेद् बुधः ।
विवादं धनहेतोर्वा मोहाद् वा तैर्न रोचयेत् ॥
ब्रह्मचर्यमहिंसा च दानानि विविधानि च ।
गुरुभिः प्रतिषिद्धस्य सर्वमेतदपार्थकम् ॥
उपाध्यायं पितरं मातरं च
येऽभिद्रुह्युर्मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तेभ्यो नान्यः पापकृदस्ति लोके ॥

*उमोवाच*

उपवासविधिं तत्र तन्मे शंसितुमर्हसि ॥

*श्रीमहेश्वर उवाच*

शरीरमलशान्त्यर्थमिन्द्रियोच्छोषणाय च ।
एकभुक्तोपवासैस्तु धारयन्ते व्रतं नराः ॥
लभन्ते विपुलं धर्मं तथाऽऽहारपरिक्षयात् ।
बहूनामुपरोधं तु न कुर्यादात्मकारणात् ॥
जीवोपघातं च तथा स जीवन् धन्य इष्यते ।
तस्मात् पुण्यं लभेन्मर्त्यः स्वयमाहारकर्शनात् ॥
तद् गृहस्थैर्यथाशक्ति कर्तव्यमिति निश्चयः ॥
उपवासार्दिते काये आपदर्थं पयो जलम् ।
भुञ्जन्नप्रतिघाती स्याद् ब्राह्मणाननुमान्य च ॥

*उमोवाच*

ब्रह्मचर्यं कथं देव रक्षितव्यं विजानता ॥

*श्रीमहेश्वर उवाच*

तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥
ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परं तपः ।
केवलं ब्रह्मचर्येण प्राप्यते परमं पदम् ॥
संकल्पाद् दर्शनाच्चैव तद्युक्तवचनादपि ।
संस्पर्शादथ संयोगात् पञ्चधा रक्षितं व्रतम् ॥
व्रतवद्धारितं चैव ब्रह्मचर्यमकल्मषम् ।
नित्यं संरक्षितं तस्य नैष्ठिकानां विधीयते ॥
तदिष्यते गृहस्थानां कालमुद्दिश्य कारणम् ॥
जन्मनक्षत्रयोगेषु पुण्यवासेषु पर्वसु ।
देवताधर्मकार्येषु ब्रह्मचर्यव्रतं चरेत् ॥
ब्रह्मचर्यव्रतफलं लभेद् दारव्रती सदा ।
शौचमायुस्तथाऽऽरोग्यं लभ्यते ब्रह्मचारिभिः ॥

*उमोवाच*

तीर्थचर्याव्रतं देव क्रियते धर्मकाङ्क्षिभिः ।
कानि तीर्थानि लोकेषु तन्मे शंसितुमर्हसि ॥

*श्रीमहेश्वर उवाच*

हन्त ते कथयिष्यामि तीर्थस्नानविधिं प्रिये ।
पावनार्थं च शौचार्थं ब्रह्मणा निर्मितं पुरा ॥
यास्तु लोके महानद्यस्ताः सर्वास्तीर्थसंज्ञिकाः ।
तासां प्राक्स्रोतसः श्रेष्ठाः सङ्गमश्च परस्परम् ॥
तासां सागरसंयोगो वरिष्ठश्चेति विद्यते ॥
तासामुभयतः कूलं तत्र तत्र मनीषिभिः ।
देवैर्वा सेवितं देवि तत् तीर्थं परमं स्मृतम् ॥
समुद्रश्च महातीर्थं पावनं परमं शुभम् ।
तस्य कूलगतास्तीर्था महद्भिश्च समाप्लुताः ॥
स्रोतसां पर्वतानां च जोषितानां महर्षिभिः ।
अपि कूलं तटाकं वा सेवितं मुनिभिः प्रिये ॥
तत् तु तीर्थमिति ज्ञेयं प्रभावात् तु तपस्विनाम् ॥
तदाप्रभृति तीर्थत्वं लभेल्लोकहिताय वै ।
एवं तीर्थं भवेद् देवि तस्य स्नानविधिं शृणु ॥
जन्मना व्रतभूयिष्ठो गत्वा तीर्थानि काङ्क्षया ।
उपवासत्रयं कुर्यादेकं वा नियमान्वितः ॥
पुण्यमासयुते काले पौर्णमास्यां यथाविधि ।
बहिरेव शुचिर्भूत्वा तद् तीर्थं मनसा विशेत् ॥

त्रिराप्लुत्य जलाभ्याशे दत्त्वा ब्राह्मणदक्षिणाम् ।
अभ्यर्च्य देवायतनं ततः प्रायाद् यथागतम् ॥
एतद् विधानं सर्वेषां तीर्थं तीर्थमिति प्रिये ।
समीपतीर्थस्नानात् तु दूरतीर्थं सुपूजितम् ॥
आदिप्रभृति शुद्धस्य तीर्थस्नानं शुभं भवेत् ।
तपोऽर्थं पापनाशार्थं शौचार्थं तीर्थगाहनम् ॥
एवं पुण्येषु तीर्थेषु तीर्थस्नानं शुभं भवेत् ।
एतन्नैयमिकं सर्वं सुकृतं कथितं तव ॥

*उमोवाच*

लोकसिद्धं तु यद् द्रव्यं सर्वसाधारणं भवेत् ।
तद् ददत् सर्वसामान्यं कथं धर्मं लभेन्नरः ॥

*श्रीमहेश्वर उवाच*

लोके भूतमयं द्रव्यं सर्वसाधारणं तथा ।
तथैव तद् ददन्मर्त्यो लभेत् पुण्यं स तच्छृणु ॥
दाता प्रतिग्रहीता च देयं सोपक्रमं तथा ।
देशकालौ च यत् त्वेतद् दानं षड्गुणमुच्यते ॥
तेषां सम्पद्विशेषांश्च कीर्त्यमानान् निबोध मे ।
आदिप्रभृति यः शुद्धो मनोवाक्कायकर्मभिः ।
सत्यवादी जितक्रोधस्त्वलुब्धो नाभ्यसूयकः ॥
श्रद्धावानास्तिकश्चैव एवं दाता प्रशस्यते ॥
शुद्धो दान्तो जितक्रोधस्तथादीनकुलोद्भवः ।
श्रुतचारित्रसम्पन्नस्तथा बहुकलत्रवान् ॥
पञ्चयज्ञपरो नित्यं निर्विकारशरीरवान् ।
एतान् पात्रगुणान् विद्धि तादृक् पात्रं प्रशस्यते ॥
पितृदेवाग्निकार्येषु तस्य दत्तं महत् फलम् ।
यद् यदर्हति यो लोके पात्रं तस्य भवेच्च सः ॥
मुच्येद्यापदमापन्नो येन पात्रं तदस्य तु ।
अन्नस्य क्षुधितं पात्रं तृषितं तु जलस्य वै ॥
एवं पात्रेषु नानात्वमिष्यते पुरुषं प्रति ।
जारश्चोरश्च षण्ढश्च हिंस्रः समयभेदकः ।
लोकविघ्नकराश्चान्ये वर्जिताः सर्वशः प्रिये ॥
परोपघाताद् यद् द्रव्यं चौर्याद् वा लभ्यते नृभिः ।
निर्दयाल्लभ्यते यच्च धूर्तभावेन वै तथा ॥
अधर्मादर्थमोहाद् वा बहूनामुपरोधनात् ।
लभ्यते यद् धनं देवि तदत्यन्तविगर्हितम् ॥
तादृशेन कृतं धर्मं निष्फलं विद्धि भामिनि ।
तस्मान्न्यायागतेनैव दातव्यं शुभमिच्छता ॥
यद् यदात्मप्रियं नित्यं तत् तद् देयमिति स्थितिः ।
उपक्रममिमं विद्धि दातॄणां परमं हितम् ॥
पात्रभूतं तु दूरस्थमभिगम्य प्रसाद्य च ।
दाता दानं तथा दद्याद् यथा तुष्येत तेन सः ॥
एष दानविधिः श्रेष्ठः समाहूय तु मध्यमः ॥
पूर्वं च पात्रतां ज्ञात्वा समाहूय निवेद्य च ।
शौचाचमनसंयुक्तं दातव्यं श्रद्धया प्रिये ॥
याचितॄणां तु परममाभिमुख्यं पुरस्कृतम् ।
सम्मानपूर्वं संग्राह्यं दातव्यं देशकालयोः ॥
अपात्रेभ्योऽपि चान्येभ्यो दातव्यं भूतिमिच्छता ॥
पात्राणि सम्परीक्ष्यैव दात्रा वै दानमात्रया ।
अतिशक्त्या परं दानं यथाशक्त्या तु मध्यमम् ॥
तृतीयं चापरं दानं नानुरूपमिवात्मनः ॥
यथा सम्भावितं पूर्वं दातव्यं तत् तथैव च ।
पुण्यक्षेत्रेषु यद् दत्तं पुण्यकालेषु वा तथा ॥
तच्छोभनतरं विद्धि गौरवाद् देशकालयोः ।

*उमोवाच*

यश्च पुण्यतमो देशस्तथा कालश्च शंस मे ॥

*श्रीमहेश्वर उवाच*

कुरुक्षेत्रं महानद्यो यच्च देवर्षिसेवितम् ।
गिरिर्वरश्च तीर्थानि देशभागेषु पूजितः ॥
ग्रहीतुमीप्सते यत्र तत्र दत्तं महाफलम् ॥
शरद्वसन्तकालश्च पुण्यमासस्तथैव च ।
शुक्लपक्षश्च पक्षाणां पौर्णमासी च पर्वसु ॥
पितृदैवतनक्षत्रनिर्मलो दिवसस्तथा ।
तच्छोभनतरं विद्धि चन्द्रसूर्यग्रहे तथा ॥
दाता देयं च पात्रं च उपक्रमयुता क्रिया ।
देशकालं तथेत्येषां सम्पच्छुद्धिः प्रकीर्तिता ॥
यदैव युगपत् सम्पत् तत्र दानं महद् भवेत् ॥
अत्यल्पमपि यद् दानमेभिः षड्भिर्गुणैर्युतम् ।
भूत्वानन्तं नयेत् स्वर्गं दातारं दोषवर्जितम् ॥

*उमोवाच*

एवंगुणयुतं दानं दत्तं चाफलतां व्रजेत् ।

*श्रीमहेश्वर उवाच*

तदप्यस्ति महाभागे नराणां भावदोषतः ॥
कृत्वा धर्मं तु विधिवत् पश्चात्तापं करोति चेत् ।
श्लाघया वा यदि ब्रूयाद् वृथा संसदि यत् कृतम् ॥
एते दोषा विवर्ज्याश्च दातृभिः पुण्यकाङ्क्षिभिः ॥
सनातनमिदं वृत्तं सद्भिराचरितं तथा ।
अनुग्रहात् परेषां तु गृहस्थानामृणं हि तत् ॥
इत्येवं मन आविश्य दातव्यं सततं बुधैः ॥
एवमेव कृतं नित्यं सुकृतं तद् भवेन्महत् ।
सर्वसाधारणं द्रव्यमेवं दत्त्वा महत् फलम् ॥

*उमोवाच*

भगवन् कानि देयानि धर्ममुद्दिश्य मानवैः ।
तान्यहं श्रोतुमिच्छामि तन्मे शंसितुमर्हसि ॥

श्रीमहेश्वर उवाच

अजस्रं धर्मकार्यं च तथा नैमित्तिकं प्रिये ।
अन्नं प्रतिश्रयो दीपः पानीयं तृणमिन्धनम् ॥
स्नेहो गन्धश्च भैषज्यं तिलाश्च लवणं तथा ।
एवमादि तथान्यच्च दानमाजस्रमुच्यते ॥
अन्नं प्राणो मनुष्याणामन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातुमिच्छति मानवः ॥
ब्राह्मणायाभिरूपाय यो दद्यादन्नमीप्सितम् ।
निदधाति निधिश्रेष्ठं सोऽनन्तं पारलौकिकम् ॥
श्रान्तमध्वपरिश्रान्तमतिथिं गृहमागतम् ।
अर्चयीत प्रयत्नेन स हि यज्ञो वरप्रदः ॥
पितरस्तस्य नन्दन्ति सुवृष्ट्या कर्षका इव ।
पुत्रो यस्य तु पौत्रो वा श्रोत्रियं भोजयिष्यति ॥
अपि चाण्डालशूद्राणामन्नदानं न गर्ह्यते ।
तस्मात् सर्वप्रयत्नेन दद्यादन्नममत्सरः ॥
अन्नदानाच्च लोकांस्तान् सम्प्रवक्ष्याम्यनिन्दिते ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥
अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्चिःप्रकाशानि हेमरूप्यनिभानि च ॥
नानारूपाणि संस्थानां नानारत्नमयानि च ।
चन्द्रमण्डलशुभ्राणि किंकिणीजालवन्ति च ॥
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
यथेष्टभक्ष्यभोज्यानि शयनासनवन्ति च ॥
सर्वकामफलाश्चात्र वृक्षा भवनसंस्थिताः ।
वाप्यो बह्व्यश्च कूपाश्च दीर्घिकाश्च सहस्रशः ॥
अरुजानि विशोकानि नित्यानि विविधानि च ।
भवनानि विचित्राणि प्राणदानां त्रिविष्टपे ॥
विवस्वतश्च सोमस्य ब्रह्मणश्च प्रजापतेः ।
विशन्ति लोकांस्ते नित्यं जगत्यन्नोदकप्रदाः ॥
तत्र ते सुचिरं कालं विहृत्याप्सरसां गणैः ।
जायन्ते मानुषे लोके सर्वकल्याणसंयुताः ॥
बलसंहननोपेता नीरोगाश्चिरजीविनः ।
कुलीना मतिमन्तश्च भवन्त्यन्नप्रदा नराः ॥
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
सर्वकालं च सर्वस्य सर्वत्र च सदैव च ॥
सुवर्णदानं परमं स्वर्ग्यं स्वस्त्ययनं महत् ।
तस्मात् ते वर्णयिष्यामि यथावदनुपूर्वशः ॥
अपि पापकृतं क्रूरं दत्तं रुक्मं प्रकाशयेत् ॥
सुवर्णं ये प्रयच्छन्ति श्रोत्रियेभ्यः सुचेतसः ।
देवतास्ते तर्पयन्ति समस्ता इति वैदिकम् ॥
अग्निर्हि देवताः सर्वाः सुवर्णं चाग्निरुच्यते ।
तस्मात् सुवर्णदानेन तृप्ताः स्युः सर्वदेवताः ॥
अग्न्यभावे तु कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
तस्मात् सुवर्णदातारः सर्वान् कामानवाप्नुयुः ॥
आदित्यस्य हुताशस्य लोकान् नानाविधाञ्शुभान् ।
काञ्चनं सम्प्रदायाशु प्रविशन्ति न संशयः ॥
अलंकारं कृतं चापि केवलात् प्रविशिष्यते ।
सौवर्णैर्ब्राह्मणं काले तैरलंकृत्य भोजयेत् ॥
य एतत् परमं दानं दत्त्वा सौवर्णमद्भुतम् ।
द्युतिं मेधां वपुः कीर्तिं पुनर्जाते लभेद् ध्रुवम् ॥
तस्मात् स्वशक्त्या दातव्यं काञ्चनं भुवि मानवैः ।
न ह्येतस्मात् परं लोकेष्वन्यत् पापात् प्रमुच्यते ॥
अत ऊर्ध्वं प्रवक्ष्यामि गवां दानमनिन्दिते ।
न हि गोभ्यः परं दानं विद्यते जगति प्रिये ॥
लोकान् सिसृक्षुणा पूर्वं गावः सृष्टाः स्वयम्भुवा ।
वृत्त्यर्थं सर्वभूतानां तस्मात् ता मातरः स्मृताः ॥

लोकज्येष्ठा लोकवृत्त्यां प्रवृत्ता
मय्यायत्ताः सोमनिष्यन्दभूताः ।
सौम्याः पुण्याः कामदाः प्राणदाश्च
तस्मात् पूज्याः पुण्यकामैर्मनुष्यैः ॥
धेनुं दत्त्वा निभृतां सुशीलां
कल्याणवत्सां च पयस्विनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावत्समाः स्वर्गफलानि भुङ्क्ते ॥
प्रयच्छते यः कपिलां सचैलां
सकांस्यदोहां कनकाग्र्यशृङ्गीम् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥
अन्तर्जाताः क्रीतका द्यूतलब्धाः
प्राणक्रीताः सोदकाश्चौजसा वा ।
कृच्छ्रोत्सृष्टाः पोषणार्थागताश्च
द्वारैरेतैस्ताः प्रलब्धाः प्रदद्यात् ॥

कृशाय बहुपुत्राय श्रोत्रियायाहिताग्नये ।
प्रदाय नीरुजां धेनुं लोकान् प्राप्नोत्यनुत्तमान् ॥
नृशंसस्य कृतघ्नस्य लुब्धस्यानृतवादिनः ।
हव्यकव्यव्यपेतस्य न दद्याद् गाः कथंचन ॥
समानवत्सां यो दद्याद् धेनुं विप्रे पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नां सोमलोके महीयते ॥
समानवत्सां यो दद्यात् कृष्णां धेनुं पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नां लोकान् प्राप्नोत्यपाम्पतेः ॥
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंछन्नां यान्ति कौबेरसद्मनः ॥
वायुरेणुसवर्णां च सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंछन्नां वायुलोके महीयते ॥
समानवत्सां यो धेनुं दत्त्वा गौरीं पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नामग्निलोके महीयते ॥

युवानं बलिनं श्यामं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलंकृतम् ॥
ऋषभं ये प्रयच्छन्ति श्रोत्रियाणां महात्मनाम् ।
ऐश्वर्यमभिजायन्ते जायमानाः पुनः पुनः ॥
गवां मूत्रपुरीषाणि नोद्विजेत कदाचन ।
न चासां मांसमश्नीयाद् गोषु भक्तः सदा भवेत् ॥
ग्रासमुष्टिं परगवे दद्यात् संवत्सरं शुचिः ।
अकृत्वा स्वयमाहारं व्रतं तत् सार्वकामिकम् ॥
गवामुभयतः काले नित्यं स्वस्त्ययनं वदेत् ।
न चासां चिन्तयेत् पापमिति धर्मविदो विदुः ॥
गावः पवित्रं परमं गोषु लोकाः प्रतिष्ठिताः ।
कथंचिन्नावमन्तव्या गावो लोकस्य मातरः ॥
तस्मादेव गवां दानं विशिष्टमिति कथ्यते ।
गोषु पूजा च भक्तिश्च नरस्यायुष्यतां वहेत् ॥
अतः परं प्रवक्ष्यामि भूमिदानं महाफलम् ।
भूमिदानसमं दानं लोके नास्तीति निश्चयः ॥
गृहयुक् क्षेत्रयुग् वापि भूमिभागः प्रदीयते ।
सुखभोगं निराक्रोशं वास्तुपूर्वं प्रकल्प्य च ॥
प्रहीतारमलंकृत्य वस्त्रपुष्पानुलेपनैः ।
सभृत्यं सपरीवारं भोजयित्वा यथेष्टतः ॥
यो दद्याद् दक्षिणां काले त्रिरद्भिर्गृह्यतामिति ॥
एवं भूम्यां प्रदत्तायां श्रद्धया वीतमत्सरैः ।
यावत् तिष्ठति सा भूमिस्तावत् तस्य फलं विदुः ।
भूमिदः स्वर्गमारुह्य रमते शाश्वतीः समाः ।
अचला ह्यक्षया भूमिः सर्वकामान् दुधुक्षति ॥
यत् किंचित् कुरुते पापं पुरुषो वृत्तिकर्शितः ।
अपि गोकर्णमात्रेण भूमिदानेन मुच्यते ॥
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाभागे भूमिदाने प्रतिष्ठितम् ॥
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकाय संसिद्धा नातिक्रामन्ति भूमिदम् ॥
हलकृष्टां महीं दद्याद् यत्सबीजफलान्विताम् ।
सुकूपशरणां वापि सा भवेत् सर्वकामदा ॥
निष्पन्नसस्यां पृथिवीं यो ददाति द्विजन्मनाम् ।
विमुक्तः कलुषैः सर्वैः शक्रलोकं स गच्छति ॥
यथा जनित्री क्षीरेण स्वपुत्रमभिवर्धयेत् ।
एवं सर्वफलैर्भूमिर्दातारमभिवर्धयेत् ॥
ब्राह्मणं वृत्तसम्पन्नमाहिताग्निं शुचिव्रतम् ।
ग्राहयित्वा निजां भूमिं न यान्ति यमसादनम् ॥
यथा चन्द्रमसो वृद्धिरहन्यहनि दृश्यते ।
तथा भूमेः कृतं दानं सस्ये सस्ये विवर्धते ॥
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानगुणार्जिताः ॥

पितरः पितृलोकस्था देवताश्च दिवि स्थिताः ।
संतर्पयन्ति भोगैस्तं यो ददाति वसुंधराम् ॥
दीर्घायुष्यं वराङ्गत्वं स्फीतां च श्रियमुत्तमाम् ।
परत्र लभते मर्त्यः सम्प्रदाय वसुंधराम् ॥
एतत् सर्वं मयोद्दिष्टं भूमिदानस्य यत् फलम् ।
श्रद्दधानैर्नरैर्नित्यं श्राव्यमेतत् सनातनम् ॥
अतः परं प्रवक्ष्यामि कन्यादानं यथाविधि ।
कन्या देया महादेवि परेषामात्मनोऽपि वा ॥
कन्यां शुद्धव्रताचारां कुलरूपसमन्विताम् ।
यस्मै दित्सति पात्राय तेनापि भृशकामिताम् ॥
प्रथमं तां समाकल्प्य बन्धुभिः कृतनिश्चयाम् ।
कारयित्वा गृहं पूर्वं दासीदासपरिच्छदैः ॥
गृहोपकरणैश्चैव पशुधान्येन संयुताम् ।
तदर्थिने तदर्हाय कन्यां तां समलङ्कृताम् ॥
सविवाहं यथान्यायं प्रयच्छेदग्निसाक्षिकम् ॥
वृत्त्यायतीं यथा कृत्वा सद्गृहे तौ निवेशयेत् ॥
एवं कृत्वा वधूदानं तस्य दानस्य गौरवात् ।
प्रेत्यभावे महीयेत स्वर्गलोके यथासुखम् ॥
पुनर्जातश्च सौभाग्यं कुलवृद्धिं तथाऽऽप्नुयात् ॥
विद्यादानं तथा देवि पात्रभूताय वै ददत् ।
प्रेत्यभावे लभेन्मर्त्यो मेधां बुद्धिं धृतिं स्मृतिम् ॥
अनुरूपाय शिष्याय यश्च विद्यां प्रयच्छति ।
यथोक्तस्य प्रदानस्य फलमानन्त्यमश्नुते ॥
दापनं त्वथ विद्यानां दरिद्रेभ्योऽर्थवेदनैः ।
स्वयं दत्तेन तुल्यं स्यादिति विद्धि शुभानने ॥
एवं ते कथितान्येव महादानानि मानिनि ।
त्वत्प्रियार्थं मया देवि भूयः श्रोतुं किमिच्छसि ॥

*उमोवाच*

भगवन् देवदेवेश कथं देयं तिलान्वितम् ।
तस्य तस्य फलं ब्रूहि दत्तस्य च कृतस्य च ॥

*श्रीमहेश्वर उवाच*

तिलकल्पविधिं देवि तन्मे शृणु समाहिता ॥
समृद्धैरसमृद्धैर्वा तिला देया विशेषतः ।
तिलाः पवित्राः पापघ्नाः सुपुण्या इति संस्मृताः ॥
न्यायतस्तु तिलाञ्शुद्धान् संहृत्याथ स्वशक्तितः ।
तिलराशिं पुनः कुर्यात् पर्वताभं सरत्नकम् ॥
महान्तं यदि वा स्तोकं नानाद्रव्यसमन्वितम् ॥
सुवर्णरजताभ्यां च मणिमुक्ताप्रवालकैः ।
अलंकृत्य यथायोगं सपताकं सवेदिकम् ॥
सभूषणं सवस्त्रं च शयनासनसम्मितम् ॥
प्रायशः कौमुदीमासे पौर्णमास्यां विशेषतः ।
भोजयित्वा च विधिवद् ब्राह्मणानर्हतो बहून् ॥

होमार्थं चाग्निहोत्रस्य यां प्रयच्छेत् प्रयत्नतः ।
श्रोत्रियाय दरिद्राय श्रान्तायामिततेजसे ।
तेन दानेन पूतात्मा मम लोके महीयते ॥
सुवर्णखुरशृङ्गीं च कपिलां यः प्रयच्छति ।
विषुवे चायने चापि सोऽश्वमेधफलं लभेत् ॥
तेनाश्वमेधतुल्येन मम लोकं स गच्छति ॥
अग्निष्टोमसहस्रस्य वाजपेयं च तत्समम् ।
वाजपेयसहस्रस्य अश्वमेधं च तत्समम् ।
अश्वमेधसहस्रस्य राजसूयं च तत्समम् ॥
कपिलानां सहस्रेण विधिदत्तेन पाण्डव ।
राजसूयफलं प्राप्य मम लोके महीयते ।
न तस्य पुनरावृत्तिर्विद्यते कुरुपुङ्गव ॥

तैस्तैर्गुणैः कामदुघा च भूत्वा
नरं प्रदातारमुपैति सा गौः ।
स्वकर्मभिश्चाप्यनुबध्यमानं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुनीता
दत्ता हि गौस्तारयते मनुष्यम् ॥
यथौषधं मन्त्रकृतं नरस्य
प्रयुक्तमात्रं विनिहन्ति रोगान् ।
तथैव दत्ता कपिला सुपात्रे
पापं नरस्याशु निहन्ति सर्वम् ॥
यथा त्वचं वै भुजगो विहाय
पुनर्नवं रूपमुपैति पुण्यम् ।
तथैव मुक्तः पुरुषः स्वपापै-
र्विरज्यते वै कपिलाप्रदानात् ॥
यथान्धकारं भवने विलग्नं
दीप्तो हि निर्यातयति प्रदीपः ।
तथा नरः पापमपि प्रलीनं
निष्कामयेद् वै कपिलाप्रदानात् ॥
यस्याहिताग्नेरतिथिप्रियस्य
शूद्रान्नदूरस्य जितेन्द्रियस्य ।
सत्यव्रतस्याध्ययनान्वितस्य
दत्ता हि गौस्तारयते परत्र ॥

[ कपिलायाङ्गधिदेवानां निवासस्य, कपिलाया माहात्म्यस्य, अयोग्य ब्राह्मणस्य नरकप्रदानां पापानां स्वर्ग-प्रापकानां पुण्यानां च वर्णनम् ]

वैशम्पायन उवाच

एवं श्रुत्वा परं पुण्यं कपिलादानमुत्तमम् ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥
देवदेवेश कपिला यदा विप्राय दीयते ।
कथं सर्वेषु चाङ्गेषु तस्यास्तिष्ठन्ति देवताः ॥
याश्चैताः कपिलाः प्रोक्ता दश चैव त्वया मम ।
तासां कति सुरश्रेष्ठ कपिलाः पुण्यलक्षणाः ॥
युधिष्ठिरेणैवमुक्तः केशवः सत्यवाक् तदा ।
गुह्यानां परमं गुह्यं प्रवक्तुमुपचक्रमे ॥
शृणु राजन् पवित्रं वै रहस्यं धर्ममुत्तमम् ।
इदं पठति यः पुण्यं कपिलादानमुत्तमम् ।
प्रातरुत्थाय मद्भक्त्या तस्य पुण्यफलं शृणु ॥
मनसा कर्मणा वाचा मतिपूर्वं युधिष्ठिर ।
पापं रात्रिकृतं हन्यादस्याध्यायस्य पाठकः ॥
इदमावर्तमानस्तु श्राद्धे यस्तर्पयेद् द्विजान् ।
तस्याप्यमृतमश्नन्ति पितरोऽत्यन्तहर्षिताः ॥
यश्चेदं शृणुयाद् भक्त्या मद्गतेनान्तरात्मना ।
तस्य रात्रिकृतं सर्वं पापमाशु प्रणश्यति ॥
अतः परं विशेषं तु कपिलानां ब्रवीमि ते ।
याश्चैताः कपिलाः प्रोक्ता दश राजन् मया तव ।
तासां चतस्रः प्रवराः पुण्याः पापविनाशनाः ॥
सुवर्णकपिला पुण्या तथा रक्ताक्षपिङ्गला ।
पिङ्गलाक्षी च या गौश्च स्यात् पिङ्गलपिङ्गला ॥
एताश्चतस्रः प्रवराः पवित्राः पापनाशनाः ।
नमस्कृता वा दृष्टा वा घ्नन्ति पापं नरस्य तु ॥
यस्यैताः कपिलाः सन्ति गृहे पापप्रणाशनाः ।
तत्र श्रीर्विजयः कीर्तिः स्फीता नित्यं युधिष्ठिर ॥
एतासां प्रीतिमायाति क्षीरेण तु वृषध्वजः ।
दध्ना च त्रिदशाः सर्वे घृतेन तु हुताशनः ॥
कपिलायाः घृतं क्षीरं दधि पायसमेव वा ।
श्रोत्रियेभ्यः सकृद् दत्त्वा नरः पापैः प्रमुच्यते ॥
उपवासं तु यः कृत्वाप्यहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यं तु पीत्वा चान्द्रायणात् परम् ॥
सौम्ये मुहूर्ते तत् प्राश्य शुद्धात्मा शुद्धमानसः ।
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ॥
कपिलापञ्चगव्येन समन्त्रेण पृथक् पृथक् ।
यो मत्प्रतिकृतिं वापि शङ्कराकृतिमेव वा ।
स्नापयेद् विषुवे यस्तु सोऽश्वमेधफलं लभेत् ॥
स मुक्तपापः शुद्धात्मा यानेनाम्बरशोभिना ।
मम लोकं व्रजेन्मुक्तो रुद्रलोकमथापि वा ॥
तस्मात् तु कपिला देया परत्र हितमिच्छता ॥
यदा च दीयते राजन् कपिला ह्यग्निहोत्रिणे ।
तदा च शृङ्गयोस्तस्या विष्णुरिन्द्रश्च तिष्ठतः ।
चन्द्रवज्रधरौ चापि तिष्ठतः शृङ्गमूलयोः ।
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः ॥
कर्णयोरश्विनौ देवौ चक्षुषी शशिभास्करौ ।
दन्तेषु मरुतो देवा जिह्वायां वाक् सरस्वती ॥
रोमकूपेषु मुनयश्चर्मण्येव प्रजापतिः ।
निःश्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः ॥

नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च।
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः॥
साध्या देवाः स्थिताः कक्षे ग्रीवायां पार्वती स्थिता।
पृष्ठे च नक्षत्रगणाः ककुद्देशे नभःस्थलम्॥
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम्।
अष्टैश्वर्यमयी लक्ष्मीर्गोमये वसते तदा॥
नासिकायां सदा देवी ज्येष्ठा वसति भामिनी।
श्रोणीतटस्थाः पितरो रमा लाङ्गूलमाश्रिता॥
पार्श्वयोरुभयोः सर्वे विश्वेदेवाः प्रतिष्ठिताः।
तिष्ठत्युरसि तासां तु प्रीतः शक्तिधरो गुहः॥
जानुजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः।
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः॥
चत्वारः सागराः पूर्णास्तस्या एव पयोधराः।
रतिर्मेधा क्षमा स्वाहा श्रद्धा शान्तिर्धृतिः स्मृतिः॥
कीर्तिर्दीप्तिः क्रिया कान्तिस्तुष्टिः पुष्टिश्च संततिः।
दिशश्च प्रदिशश्चैव सेवन्ते कपिलां सदा॥
देवाः पितृगणाश्चापि गन्धर्वाप्सरसां गणाः।
लोका द्वीपार्णवाश्चैव गङ्गाद्याः सरितस्तथा॥
देवाः पितृगणाश्चापि वेदाः साङ्गाः सहाध्वरैः।
वेदोक्तैर्विविधैर्मन्त्रैः स्तुवन्ति हृषितास्तथा॥
विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा।
पुष्पवृष्टिं च वर्षन्ति प्रनृत्यन्ति च हर्षिताः॥
ब्रह्मणोत्पादिता देवी वह्निकुण्डान्महाप्रभा।
नमस्ते कपिले पुण्ये सर्वदेवैर्नमस्कृते॥
कपिलेऽथ महासत्त्वे सर्वतीर्थमये शुभे।
अहो रत्नमिदं पुण्यं सर्वदुःखघ्नमुत्तमम्।
अहो धर्मार्जितं शुद्धमिदमग्र्यं महाधनम्॥
इत्याकाशस्थितास्ते तु सर्वदेवा जपन्ति च॥

*युधिष्ठिर उवाच*

देवदेवेश दैत्यघ्न कालः को हव्यकव्ययोः।
के तत्र पूजामर्हन्ति वर्जनीयाश्च के द्विजाः॥

*श्रीभगवानुवाच*

दैवं पूर्वाह्णिकं ज्ञेयं पैतृकं चापराह्णिकम्।
कालहीनं च यद् दानं तद्दानं राजसं विदुः॥
अवघुष्टं च यद् भुक्तमनृतेन च भारत।
परामृष्टं शुना वापि तद् भागं राक्षसं विदुः॥
यावन्तः पतिता विप्रा जडोन्मत्तादयोऽपि च।
दैवे च पित्र्ये ते विप्रा राजन् नार्हन्ति सत्क्रियाम्॥
क्लीबः प्लीही च कुष्ठी च राजयक्ष्मान्वितश्च यः।
अपस्मारी च यश्चापि पित्र्ये नार्हति सत्कृतिम्॥
चिकित्सका देवलका मिथ्यानियमधारिणः।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम्॥
गायका नर्तकाश्चैव प्लवका वादकास्तथा।
कथका यौधिकाश्चैव श्राद्धे नार्हन्ति सत्कृतिम्॥
अनग्नयश्च ये विप्राः शवनिर्यातकाश्च ये।
स्तेनाश्चापि विकर्मस्था राजन् नार्हन्ति सत्कृतिम्॥
अपरिज्ञातपूर्वाश्च गणपुत्राश्च ये द्विजाः।
पुत्रिकापुत्रकाश्चापि श्राद्धे नार्हन्ति सत्कृतिम्॥
रणकर्ता च यो विप्रो यश्च वाणिज्यको द्विजः।
प्राणिविक्रयवृत्तिश्च श्राद्धे नार्हन्ति सत्कृतिम्॥
चीर्णव्रतगुणैर्युक्ता नित्यं स्वाध्यायतत्पराः।
सावित्रीज्ञाः क्रियावन्तस्ते श्राद्धे सत्कृतिक्षमाः॥
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा।
दर्भाः सुमनसः क्षेत्रं तत्काले श्राद्धदो भवेत्॥
चारित्रनिरता राजन् कृशा ये कृशवृत्तयः।
तपस्विनश्च ये विप्रास्तथा भैक्षचराश्च ये॥
अर्थिनः केचिदिच्छन्ति तेषां दत्तं महत् फलम्।
एवं धर्मभृतां श्रेष्ठ ज्ञात्वा सर्वात्मना तदा।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे॥
दानं यत् ते प्रियं किंचिच्छ्रोत्रियाणां च यत् प्रियम्।
तत् प्रयच्छस्व धर्मज्ञ यदीच्छसि तदक्षयम्॥
निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर॥
परदारापहर्तारः परदाराभिमर्शकाः।
परदारप्रयोक्तारस्ते वै निरयगामिनः॥
सूचकाः संधिभेत्तारः परद्रव्योपजीविनः।
वर्णाश्रमाणां ये बाह्याः पाखण्डाश्चैव पापिनः।
उपासते च तानेव ते सर्वे नरकालयाः॥
क्षान्तान् दान्तान् कृशान् प्राज्ञान् दीर्घकालं सहोषितान्।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः॥
बालानामपि वृद्धानां श्रान्तानां चापि ये नराः।
अदत्त्वाश्नन्ति मृष्टान्नं ते वै निरयगामिनः॥
एते पूर्वर्षिभिः प्रोक्ता नरा निरयगामिनः।
ये स्वर्गं समनुप्राप्तास्ताञ्छृणुष्व युधिष्ठिर॥
दानेन तपसा चैव सत्येन च दमेन च।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः॥
शुश्रूषयाप्युपाध्यायाच्छ्रुतमादाय पाण्डव।
ये प्रतिग्रहनिस्नेहास्ते नराः स्वर्गगामिनः॥
मधुमांसासवेभ्यस्तु निवृत्ता व्रतिनस्तु ये।
परदारनिवृत्ता ये ते नराः स्वर्गगामिनः॥
मातरं पितरं चैव शुश्रूषन्ति च ये नराः।
भ्रातृणामपि सस्नेहास्ते नराः स्वर्गगामिनः॥
ये तु भोजनकाले तु निर्याताश्चातिथिप्रियाः।
द्वाररोधं न कुर्वन्ति ते नराः स्वर्गगामिनः॥
वैवाहिकं तु कन्यानां दरिद्राणां च ये नराः।
कारयन्ति च कुर्वन्ति ते नराः स्वर्गगामिनः॥

रसानामथ बीजानामोषधीनां तथैव च ।
दातारः श्रद्धयोपेतास्ते नराः स्वर्गगामिनः ॥
क्षेमाक्षेमं च मार्गेषु समानि विषमाणि च ।
अर्थिनां ये च वक्ष्यन्ति ते नराः स्वर्गगामिनः ॥
पर्वद्वये चतुर्दश्यामष्टम्यां संध्ययोर्द्वयोः ।
आर्द्रायां जन्मनक्षत्रे विषुवे श्रवणेऽथवा ।
ये ग्राम्यधर्मविरतास्ते नराः स्वर्गगामिनः ॥
हव्यकव्यविधानं च नरकस्वर्गगामिनौ ।
धर्माधर्मौ च कथितौ किं भूयः श्रोतुमिच्छसि ॥

[ ब्रह्महत्यासदृशानां पापानामन्नदानप्रशंसायास्त्याज्यान्नानां पापिनां दानफलानां धर्मप्रशंसायाश्च वर्णनम् ]

*युधिष्ठिर उवाच*

इदं मे तत्त्वतो देव वक्तुमर्हस्यशेषतः ।
हिंसामकृत्वा यो मर्त्यो ब्रह्महत्यामवाप्नुयात् ॥

*श्रीभगवानुवाच*

ब्राह्मणं स्वयमाहूय भिक्षार्थं वृत्तिकर्शितम् ।
ब्रूयान्नास्तीति यः पश्चात् तमाहुर्ब्रह्मघातकम् ॥
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तमाहुर्ब्रह्मघातकम् ॥
आश्रमे वाऽऽलये वापि ग्रामे वा नगरेऽपि वा ।
अग्निं यः प्रक्षिपेत् क्रुद्धस्तमाहुर्ब्रह्मघातकम् ॥
गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥
यः प्रवृत्तां श्रुतिं सम्यक्छास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तमाहुर्ब्रह्मघातकम् ॥
चक्षुषा वापि हीनस्य पङ्गोर्वापि जडस्य वा ।
हरेद् वै यस्तु सर्वस्वं तमाहुर्ब्रह्मघातकम् ॥
गुरुं त्वंकृत्य हुंकृत्य अतिक्रम्य च शासनम् ।
वर्तते यस्तु मूढात्मा तमाहुर्ब्रह्मघातकम् ॥
यावत्सारो भवेद् दीनस्तन्नाशो यस्य दुःस्थितिः ।
तत् सर्वस्वं हरेद् यो वै तमाहुर्ब्रह्मघातकम् ॥

*युधिष्ठिर उवाच*

सर्वेषामपि दानानां यत् तु दानं विशिष्यते ।
अभोज्यान्नाश्च ये विप्रास्तान् वदस्व सुरोत्तम ॥

*श्रीभगवानुवाच*

अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरस्सराः ।
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥
अन्नमूर्जस्करं लोके ह्यन्नात् प्राणाः प्रतिष्ठिताः ।
अभोज्यान्नान् मया राजन् वक्ष्यमाणान् निबोध मे ॥
दीक्षितस्य कदर्यस्य क्रुद्धस्य निकृतस्य च ।
अभिशस्तस्य षाण्ढस्य पाकभेदकरस्य च ॥
चिकित्सकस्य दूतस्य तथा चोच्छिष्टभोजिनः ।
उग्रान्नं सूतकान्नं च शूद्रोच्छेषणमेव च ॥
द्विषदन्नं न भोक्तव्यं पतितान्नं च यच्छ्रुतम् ।
तथा च पिशुनस्यान्नं यज्ञविक्रयिणस्तथा ॥
शैलूषं तन्तुवायान्नं कृतघ्नस्यान्नमेव च ।
अम्बष्ठकनिषादानां रङ्गावतरकस्य च ॥
सुवर्णकर्तुर्वैणस्य शस्त्रविक्रयिणस्तथा ।
सूतानां शौण्डिकानां च वैद्यस्य रजकस्य च ॥
स्त्रीजितस्य नृशंसस्य तथा माहिषिकस्य च ।
अनिर्दशानां प्रेतानां गणिकानां तथैव च ॥
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चर्मविकृन्तिनः ॥
गणान्नं गणिकान्नं च लोकेभ्यः परिकीर्तितम् ।
पूयं चिकित्सकस्यान्नं शुक्लं तु वृषलीपतेः ॥
विष्ठा वार्धुषिकस्यान्नं तस्मात् तत् परिवर्जयेत् ।
अमत्यान्नमथैतेषां भुक्त्वा तु त्रियहं क्षिपेत् ।
मत्या भुक्त्वा सकृद् वापि प्राजापत्यं चरेद् द्विज
दानानां च फलं यद् वै शृणु पाण्डव तत्त्वतः ।
जलदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ॥
तिलदश्च प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमिदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ॥
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ॥
अनडुहः श्रियं जुष्टां गोदो गोलोकमश्नुते ।
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ॥
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम् ।
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ॥
हिरण्यभूगवाश्वाजवस्त्रशय्यासनादिषु ।
योऽर्चितः प्रतिगृह्णाति दद्यादुचितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये ॥
अनृतं न वदेद् विद्वांस्तपस्तप्त्वा न विस्मयेत् ।
नार्तोऽप्यभिभवेद् विप्रान् न दत्त्वा परिकीर्तयेत् ।
यशोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रावमानेन दानं तु परिकीर्तनात् ॥
एकः प्रजायते जन्तुरेक एव प्रमीयते ।
एकोऽनुभुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् ॥
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुवर्तते ॥
अनागतानि कार्याणि कर्तुं गणयते मनः ।
शारीरकं समुद्दिश्य स्मयते नूनमन्तकः ॥
तस्माद् धर्मसहायस्तु धर्मं संचिनुयात् सदा ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥

येषां तडागानि बहूदकानि
सभाश्च कूपाश्च शुभाः प्रपाश्च ।
अन्नप्रदानं मधुरा च वाणी
यमस्य ते निर्विषया भवन्ति ॥

[ धर्मशौचयोर्लक्षणं भिक्षवभ्यागतयोः सत्कारस्योपदेशः, शिष्टाचारो दानपात्रब्राह्मणा अन्नदानप्रशंसा च ]

*युधिष्ठिर उवाच*

अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किंलक्षणोऽसौ भवति तन्मे ब्रूहि जनार्दन ॥

*श्रीभगवानुवाच*

शृणु राजन् समासेन धर्मशौचविधिक्रमम् ।
अहिंसा शौचमक्रोधमानृशंस्यं दमः शमः ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥
ब्रह्मचर्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितिश्चैव शमः शौचस्य लक्षणम् ॥
बाल्ये विद्यां निषेवेत यौवने दारसंग्रहम् ।
वार्धके मौनमातिष्ठेत् सर्वदा धर्ममाचरेत् ॥
ब्राह्मणान् नावमन्येत गुरून् परिवदेन्न च ।
यतीनामनुकूलः स्यादेष धर्मः सनातनः ॥
यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेव गुरुः स्त्रीणां सर्वेषां पार्थिवो गुरुः ॥
एकदण्डी त्रिदण्डी वा शिखी वा मुण्डितोऽपि वा।
काषायदण्डधारोऽपि यतिः पूज्यो न संशयः ॥
तस्मात् तु यत्नतः पूज्या मद्भक्ता मत्परायणाः।
मयि संन्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ॥
प्रहरेन्न द्विजान् विप्रो गां न हन्यात् कदाचन ।
भ्रूणहत्यासमं चैव उभयं यो निषेवते ॥
नाग्निं मुखेनोपधमेन्न च पादौ प्रतापयेत्।
नाधः कुर्यात् कदाचित् तु न पृष्ठं परितापयेत्॥
श्वचण्डालादिभिः स्पृष्टो नाङ्गमग्नौ प्रतापयेत्।
सर्वदेवमयो वह्निस्तस्माच्छुद्धः सदा स्पृशेत् ॥
प्राप्तमूत्रपुरीषस्तु न स्पृशेद् वह्निमात्मवान् ।
यावत् तु धारयेद् वेगं तावदप्रयतो भवेत् ॥

*युधिष्ठिर उवाच*

कीदृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ।
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्दन ॥

*श्रीभगवानुवाच*

अक्रोधनाः सत्यपरा धर्मनित्या जितेन्द्रियाः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम्॥
अमानिनः सर्वसहा दृष्टार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महाफलम् ॥
साङ्गांश्च चतुरो वेदान् योऽधीयेत दिने दिने ।
शूद्रान्नं यस्य नो देहे तत् पात्रमृषयो विदुः ॥
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत् तत्कुलं सर्वमेकोऽपीह युधिष्ठिर ॥
गामश्वमन्नं वित्तं वा तद्विधे प्रतिपादयेत् ।
निशम्य तु गुणोपेतं ब्राह्मणं साधुसम्मतम् ।
दूरादाहृत्य सत्कृत्य तं प्रयत्नेन पूजयेत् ॥

*युधिष्ठिर उवाच*

धर्माधर्मविधिस्त्वेवं भीष्मेण सम्प्रभाषितम् ।
भीष्मवाक्यात् सारभूतं वद धर्मं सुरेश्वर ॥

*श्रीभगवानुवाच*

अन्नेन धार्यते सर्वं जगदेतच्चराचरम् ।
अन्नात् प्रभवति प्राणः प्रत्यक्षं नास्ति संशयः॥
कलत्रं पीडयित्वा तु देशे काले च शक्तितः ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥
विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ।
अर्चयेद् गुरुवत् प्रीतो गृहस्थो गृहमागतम् ॥
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अर्चयेदतिथिं प्रीतः परत्र हितभूतये ॥
अतिथिं नावमन्येत नानृतां गिरमीरयेत् ।
न पृच्छेद् गोत्रचरणं नाधीतं वा कदाचन ॥
चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ।
अन्नेन पूजनीयः स्यात् परत्र हितमिच्छता ॥
पिधाय तु गृहद्वारं भुङ्क्ते योऽन्नं प्रहृष्टवान् ।
स्वर्गद्वारपिधानं वै कृतं तेन युधिष्ठिर ॥
पितॄन् देवानृषीन् विप्रानतिथींश्च निराश्रयान् ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥
कृत्वा तु पापं बहुशो यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण सर्वपापैः प्रमुच्यते ॥
अन्नदः प्राणदो लोके प्राणदः सर्वदो भवेत् ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ॥
अन्नं ह्यमृतमित्याहुरन्नं प्रजननं स्मृतम् ।
अन्नप्रणाशे सीदन्ति शरीरे पञ्च धातवः ॥
बलं बलवतो नश्येदन्नहीनस्य देहिनः ।
तस्मादन्नं विशेषेण श्रद्धयाश्रद्धयापि वा ॥
आदत्ते हि रसं सर्वमादित्यः स्वगभस्तिभिः ।
वायुस्तस्मात् समादाय रसं मेघेषु धारयेत् ॥
तत् तु मेघगतं भूमौ शक्रो वर्षति तादृशम् ।
तेन दिग्धा भवेद् देवी मही प्रीता च भारत ॥
तस्यां सस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः।
मांसमेदोऽस्थिमज्जानां सम्भवस्तेभ्य एव हि ॥

[ भोजनविधिः, गवार्थे ग्रासमुष्टिप्रदानस्य विधिः, तिलानां माहात्म्यम्, ब्राह्मणकर्तृकतिलेक्षुप्रपीडननिषेधः ]

*युधिष्ठिर उवाच*

अन्नदानफलं श्रुत्वा प्रीतोऽस्मि मधुसूदन ।
भोजनस्य विधिं वक्तुं देवदेव त्वमर्हसि ॥

*श्रीभगवानुवाच*

भोजनस्य द्विजातीनां विधानं शृणु पाण्डव ।
स्नातः शुचिः शुचौ देशे निर्जने हुतपावकः ॥
मण्डलं कारयित्वा च चतुरस्रं द्विजोत्तमः ।
क्षत्रियश्चेत् ततो वृत्तं वैश्योऽर्धेन्दुसमाकृतम् ॥
आर्द्रपादस्तु भुञ्जीयात् प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥
नैकवासास्तु भुञ्जीयान्न चान्तर्धाय वा द्विजः ।
न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च ॥
अन्नं पूर्वं नमस्कुर्यात् प्रहृष्टेनान्तरात्मना ।
नान्यदालोकयेदन्नान्न जुगुप्सेत तत्परः ॥
जुगुप्सितं च यच्चान्नं राक्षसा एव भुञ्जते ।
पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम् ॥
पञ्च प्राणाहुतीः कुर्यात् समन्त्रं तु पृथक् पृथक् ॥
यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्यात् प्राणाहुतिमतन्द्रितः ॥
विदित्वान्नमथान्नादं पञ्च प्राणांश्च पाण्डव ।
यः कुर्यादाहुतीः पञ्च तेनेष्टाः पञ्च वायवः ॥
अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ।
तेनान्नेनासुरान् प्रेतान् राक्षसांस्तर्पयिष्यति ॥
वक्त्रप्रमाणान् पिण्डांश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकं तु यत् पिण्डमात्मोच्छिष्टं तदुच्यते ॥
पिण्डावशिष्टमन्यच्च वक्त्रान्निःसृतमेव च ।
अभोज्यं तद् विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ।
स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते भुक्तभोजनम् ॥
चान्द्रायणं चरेत् कृच्छ्रं प्राजापत्यमथापि वा ।
स्त्रीपात्रभुङ्नरः पापः स्त्रीणामुच्छिष्टभुक् तथा ॥
तया सह च यो भुङ्क्ते स भुङ्क्ते मद्यमेव हि ।
न तस्य निष्कृतिर्दृष्टा मुनिभिस्तत्त्वदर्शिभिः ॥
पिबतः पतिते तोये भोजने मुखनिःसृते ।
अभोज्यं तद् विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥
पीतशेषं तु तन्नाम न पेयं पाण्डुनन्दन ।
पिबेद् यदि हि तन्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥
मौनी वाप्यथवा भूमौ नावलोक्य दिशस्तथा ।
भुञ्जीत विधिवद् विप्रो न चोच्छिष्टं प्रदापयेत् ॥
सदा चात्यशनं नाद्यान्नातिहीनं च कर्हिचित् ।
यथान्नेन व्यथा न स्यात् तथा भुञ्जीत नित्यशः ॥
केशकीटोपपन्नं च मुखमारुतवीजितम् ।
अभोज्यं तद् विजानीयाद् भुक्त्वा चान्द्रायणं चरेत् ॥
उत्थाय च पुनः स्पृष्टं पादस्पृष्टं च लङ्घितम् ।
अन्नं तद् राक्षसं विद्यात् तस्मात् तत् परिवर्जयेत् ॥
यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात् ततः ।
स्नानं सद्यः प्रकुर्वीत सोऽन्यथाप्रयतो भवेत् ॥

*युधिष्ठिर उवाच*

तृणमुष्टिविधानं च तिलमाहात्म्यमेव च ।
इक्षोः सोमसमुद्भूतिं वक्तुमर्हसि मानद ॥

*श्रीभगवानुवाच*

पितरो वृषभा ज्ञेया गावो लोकस्य मातरः ।
तासां तु पूजया राजन् पूजिताः पितृदेवताः ॥
सभा प्रपा गृहाश्चापि देवतायतनानि च ।
शुद्ध्यन्ति शकृता यासां किं भूतमधिकं ततः ॥
ग्रासमुष्टिं परगवे दद्यात् संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं प्राप्नुयात् सार्वकालिकम् ॥
गावो मे मातरः सर्वाः पितरश्चैव गोवृषाः ।
ग्रासमुष्टिं मया दत्तं प्रतिगृह्णीत मातरः ॥
इत्युक्त्वानेन मन्त्रेण गायत्र्या वा समाहितः ।
अभिमन्त्र्य ग्रासमुष्टिं तस्य पुण्यफलं शृणु ॥
यत् कृतं दुष्कृतं तेन ज्ञानतोऽज्ञानतोऽपि वा ।
तस्य नश्यति तत् सर्वं दुःस्वप्नं च विनश्यति ॥
तिलाः पवित्राः पापघ्ना नारायणसमुद्भवाः ।
तिलाञ्छ्राद्धे प्रशंसन्ति दानं चेदमनुत्तमम् ॥
तिलान् दद्यात् तिलान् भक्ष्यात् तिलान् प्रातरुपस्पृशेत् ।
तिलं तिलमिति ब्रूयात् तिलाः पापहरा हि ते ॥
तिलान् न पीडयेद् विप्रो यन्त्रचक्रे स्वयं नृप ।
पीडयन् हि द्विजो मोहान्नरकं याति रौरवम् ॥
इक्षुवंशोद्भवः सोमः सोमवंशोद्भवा द्विजाः ।
तस्मान्न पीडयेदिक्षुं यन्त्रचक्रे द्विजोत्तमः ॥

[ आपद्धर्माः, श्रेष्ठाश्रेष्ठाश्च ब्राह्मणाः, श्राद्धस्योत्तमकालः, मानवधर्मसारस्य वर्णनम् ]

*युधिष्ठिर उवाच*

समुच्चयं च धर्माणां भोज्याभोज्यं तथैव च ।
श्रुतं मया त्वत्प्रसादादापद्धर्मं वदस्व मे ॥

*श्रीभगवानुवाच*

दुर्भिक्षे राष्ट्रसम्बाधेऽप्याशौचे मृतसूतके ।
धर्मकालेऽध्वनि तथा नियमो येन लुप्यते ॥
दूराध्वगमनात् खिन्नो द्विजालाभेऽथ शूद्रतः ।
अकृतान्नं तु यत् किंचिद् गृह्णीयादात्मवृत्तये ॥
आतुरो दुःखितो वापि तथार्तो वा बुभुक्षितः ।
भुञ्जन्नविधिना विप्रः प्रायश्चित्तायते न च ॥
अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

अशक्तो विधिवत् कर्तुं प्रायश्चित्तानि यो नरः।
विदुषां वचनेनापि दानेनापि विशुद्ध्यति॥
अनृतावृतुकाले वा दिवा रात्रौ तथापि वा।
प्रोषितस्तु स्त्रियं गच्छेत् प्रायश्चित्तीयते न च॥

*युधिष्ठिर उवाच*

प्रशस्याः कीदृशा विप्रा निन्द्याश्चापि सुरेश्वर।
अष्टकायाश्च कः कालस्तन्मे कथय सुव्रत॥

*श्रीभगवानुवाच*

कुलीनः कर्मकृद् वैद्यस्तथा चाप्यानृशंस्यवान्।
श्रीमानृजुः सत्यवादी पात्राः सर्वं इमे द्विजाः॥
एते चाग्रासनस्थास्ते भुञ्जानाः प्रथमं द्विजाः।
तस्यां पङ्क्त्यां तु ये चान्ये तान् पुनन्त्येव दर्शनात्॥
मद्भक्ता ये द्विजश्रेष्ठा मद्गता मत्परायणाः।
तान् पङ्क्तिपावनान् विद्धि पूज्यांश्चैव विशेषतः॥
निन्द्याञ्शृणु द्विजान् राजन्नपि वा वेदपारगान्॥
ब्राह्मणच्छद्मना लोके चरतः पापकारिणः।
अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः॥
यतस्ततस्तु भुञ्जानस्तं विद्याद् ब्रह्मदूषकम्।
मृतसूतकपुष्टाङ्गो यश्च शूद्रान्नभुग् द्विजः।
अहं चापि न जानामि गतिं तस्य नराधिप॥
शूद्रान्नरसपुष्टाङ्गोऽप्यधीयानो हि नित्यशः।
जपतो जुह्वतो वापि गतिरूर्ध्वं न विद्यते॥
आहिताग्निश्च यो विप्रः शूद्रान्नान्न निवर्तते।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः॥
शूद्रप्रेषणकर्तुश्च ब्राह्मणस्य विशेषतः।
भूमावन्नं प्रदातव्यं श्वशृगालसमो हि सः॥
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः।
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत्॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति॥
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः।
पदे पदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि॥
न तेषामशुभं किंचित् पापं वा शुभकर्मणाम्।
जलावगाहनादेव सद्यः शौचं विधीयते॥
शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि।
निवृत्तेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत्॥
विप्राणां भोक्तुकामानामत्यन्तं चान्नकाङ्क्षिणाम्।
यो विघ्नं कुरुते मर्त्यस्ततो नान्योऽस्ति पापकृत्॥
सर्वे च वेदाः सह षड्भिरङ्गैः
सांख्यं पुराणं च कुले च जन्म।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य॥

ग्रहोपरागे विषुवेऽयनान्ते
पित्र्ये मघासु स्वसुते च जाते।
गयेषु पिण्डेषु च पाण्डुपुत्र
दत्तं भवेन्निष्कसहस्रतुल्यम्॥
वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्तिकशुक्लपक्षे।
नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी च माघे॥
उपप्लवे चन्द्रमसो रवेश्च
श्राद्धस्य कालो ह्ययनद्वये च।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समा सहस्रं
रहस्यमेतत् पितरो वदन्ति॥
यस्त्वेकपङ्क्त्यां विषमं ददाति
स्नेहाद् भयाद् वा यदि वार्थहेतोः।
क्रूरं दुराचारमनात्मवन्तं
ब्रह्मघ्नमेनं कवयो वदन्ति॥
धनानि येषां विपुलानि सन्ति
नित्यं रमन्ते परलोकमूढाः।
तेषामयं शत्रुवरघ्न लोको
नान्यत् सुखं देहसुखे रतानाम्॥
ये चैव मुक्तास्तपसि प्रयुक्ताः
स्वाध्यायशीला जरयन्ति देहम्।
जितेन्द्रिया भूतहिते निविष्टा-
स्तेषामसौ चापि परश्च लोकः॥
ये चैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते।
न चापि गच्छन्ति सुखानि भोगां-
स्तेषामयं चापि परश्च नास्ति॥

*युधिष्ठिर उवाच*

नारायण पुराणेश लोकावास नमोऽस्तु ते।
श्रोतुमिच्छामि कार्त्स्न्येन धर्मसारसमुच्चयम्॥

*श्रीभगवानुवाच*

धर्मसारं महाप्राज्ञ मनुना प्रोक्तमादितः।
प्रवक्ष्यामि मनुप्रोक्तं पौराणं श्रुतिसंहितम्॥
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः।
दृष्टमात्रात् पुनन्त्येते तस्मात् पश्येत तान् सदा॥
बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः।
तादृग्भूतं तु तद् दानं दातारं नोपतिष्ठति॥
मा दद्वास्त्विति यो ब्रूयाद् ब्राह्मणेषु च गोषु च।
तिर्यग्योनिशतं गत्वा चण्डालेषूपजायते॥

ब्राह्मणस्वं च यद् दैवं दरिद्रस्यैव यद् धनम्।
गुरोश्चापि हृतं राजन् स्वर्गस्थानपि पातयेत् ॥
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।
द्वितीयं धर्मशास्त्राणि तृतीयं लोकसंग्रहः ॥
आसमुद्राच्च यत् पूर्वादासमुद्राच्च पश्चिमात्।
हिमाद्रिविन्ध्ययोर्मध्यमार्यावर्तं प्रचक्षते ॥
सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तद् देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥
यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥
कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसेनयः।
एते ब्रह्मर्षिदेशास्तु ब्रह्मावर्तादनन्तराः ॥
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं चरित्रं च गृह्णीयुः पृथिव्यां सर्वमानवाः ॥
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विशसनादपि।
प्रत्यगेव प्रयागात् तु मध्यदेशः प्रकीर्तितः ॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो याज्ञिको देशो म्लेच्छदेशस्ततः परम् ॥
एतान् विज्ञाय देशांस्तु संश्रयेरन् द्विजातयः।
शूद्रस्तु यस्मिन् कस्मिन् वा निवसेद् वृत्तिकर्शितः ॥
आचारः प्रथमो धर्मो ह्यहिंसा सत्यमेव च।
दानं चैव यथाशक्ति नियमाश्च यमैः सह ॥
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
गर्भहोमैर्जातकर्मनामचौलोपनायनैः।
स्वाध्यायैस्तद्व्रतैश्चैव विवाहस्नातकव्रतैः।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥
धर्मार्थौ यदि न स्यातां शुश्रूषा वापि तद्विधा।
विद्या तस्मिन् न वक्तव्या शुभं बीजमिवोषरे ॥
लौकिकं वैदिकं वापि तथाऽऽध्यात्मिकमेव वा।
यस्माज्ज्ञानमिदं प्राप्तं तं पूर्वमभिवादयेत् ॥
सव्येन सव्यं संगृह्य दक्षिणेन तु दक्षिणम्।
न कुर्यादेकहस्तेन गुरोः पादाभिवादनम् ॥
निषेकादीनि कर्माणि यः करोति यथाविधि।
अध्यापयति चैवैनं स विप्रो गुरुरुच्यते ॥
कृत्वोपनयनं वेदान् योऽध्यापयति नित्यशः।
सकल्पान् सरहस्यांश्च स चोपाध्याय उच्यते ॥
साङ्गांश्च वेदानध्याप्य शिक्षयित्वा व्रतानि च।
विवृणोति च मन्त्रार्थानाचार्यः सोऽभिधीयते ॥
उपाध्यायाद् दशाचार्य आचार्याणां शतं पिता।
पितुः शतगुणं माता गौरवेणातिरिच्यते ॥
एतेषामपि सर्वेषां गरीयान् ज्ञानदो गुरुः।
गुरोः परतरं किंचिन्न भूतं न भविष्यति ॥
तस्मात् तेषां वशे तिष्ठेच्छुश्रूषापरमो भवेत्।
अवमानाद्धि तेषां तु नरकं स्यान्न संशयः ॥
हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान् वयोऽधिकान्।
रूपद्रविणहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥
शपता यत् कृतं पुण्यं शप्यमानं तु गच्छति।
शप्यमानस्य यत् पापं शपन्तमनुगच्छति ॥
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम्।
द्वेषं दम्भं च मानं च क्रोधं तैक्ष्ण्यं विवर्जयेत् ॥

[ अग्निस्वरूपेऽग्निहोत्रस्य विधिस्तन्माहात्म्यस्य च वर्णनम् ]

*युधिष्ठिर उवाच*

कथं तद् ब्राह्मणैर्देव होतव्यं क्षत्रियैः कथम्।
वैश्यैर्वा देवदेवेश कथं वा सुहुतं भवेत् ॥
कत्यग्नयः किमात्मानः स्थानं किं कस्य वा विभो।
कतरस्मिन् हुते स्थानं कं व्रजेदाग्निहोत्रिकः ॥
अग्निहोत्रनिमित्तं च किमुत्पन्नं पुरानघ।
कथमेवाथ हूयन्ते प्रीयन्ते च सुराः कथम् ॥
विधिवन्मन्त्रवत् कृत्वा पूजितास्त्वग्नयः कथम्।
कां गतिं वदतां श्रेष्ठ नयन्ति ह्यग्निहोत्रिणः ॥
दुर्हुताश्चापि भगवन्नविज्ञातास्त्रयोऽग्नयः।
किमाहिताग्नेः कुर्वन्ति दुश्चीर्णा वापि केशव ॥
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव गच्छति।
एतत् सर्वं समासेन भक्त्या ह्युपगतस्य मे।
वक्तुमर्हसि सर्वज्ञ सर्वाधिक नमोऽस्तु ते ॥

*श्रीभगवानुवाच*

शृणु राजन् महापुण्यमिदं धर्मामृतं परम्।
यत् तु तारयते युक्तान् ब्राह्मणानग्निहोत्रिणः ॥
ब्रह्मत्वेनासृजं लोकानहमादौ महाद्युते।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ॥
यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया।
तस्मादग्नीत्यभिहितः पुराणज्ञैर्मनीषिभिः ॥
यस्मात् तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते।
आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते ॥
यस्माच्च तु नयत्यग्र्यां गतिं विप्रान् सुपूजितः।
तस्माच्च नयनाद् राजन् देवेष्वग्नीति कथ्यते ॥
यस्माच्च दुर्हुतः सोऽयमलं भक्षयितुं क्षणात्।
यजमानं नरश्रेष्ठ क्रव्यादोऽग्निस्ततः स्मृतः ॥
सर्वभूतात्मको राजन् देवानामेष वै मुखम्।
तेन सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः।
गता ह्यमरसायुज्यं ते ह्यग्न्यर्चनतत्पराः ॥
अग्निहोत्रप्रकारं च शृणु राजन् समाहितः।
त्रयाणां गुणनामानि वह्नीनामुच्यते मया ॥

गृहाणां हि पतित्वं हि गृहपत्यमिति स्मृतम्।
गृहपत्यं तु यस्यासीत् तत् तस्माद् गार्हपत्यता॥
यजमानं तु यस्मात् तु दक्षिणां तु गतिं नयेत्।
दक्षिणाग्निं तमाहुस्ते दक्षिणायतनं द्विजाः॥
आहुतिः सर्वमाख्याति हव्यं वै वहनं स्मृतम्।
सर्वहव्यवहो वह्निर्गतश्चाहवनीयताम्॥
ब्रह्मा च गार्हपत्योऽग्निस्तस्मिन्नेव हि सोऽभवत्।
दक्षिणाग्निस्त्वयं रुद्रः क्रोधात्मा चण्ड एव सः॥
अहमाहवनीयोऽग्निराहोमाद् यस्य वै मुखे।
पृथिवीमन्तरिक्षं च दिवमृषिगणैः सह।
जयत्याहवनीयं यो जुहुयाद् भक्तिमान् नरः॥
आभिमुख्येन होमस्तु यस्य यज्ञेषु वर्तते।
तेनाप्याहवनीयत्वं गतो वह्निर्महाद्युतिः॥
आहोमादग्निहोत्रेषु यज्ञैर्वा यत्र सर्वशः।
यस्मात् तस्मात् प्रवर्तन्ते ततो ह्याहवनीयता॥
आध्यात्मिकं चाधिदैवमाधिभौतिकमेव च।
एतत् तापत्रयं प्रोक्तमात्मवद्भिर्नराधिप॥
यस्माद् वै त्रायते दुःखाद् यजमानं हुतोऽनलः।
तस्मात् तु विधिवत् प्रोक्तमग्निहोत्रमिति श्रुतौ॥
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककर्तृणा।
वेदाश्चाप्यग्निहोत्रं तु जज्ञिरे स्वयमेव तु॥
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम्॥
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रवर्तते।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते सूत्रसंयुतैः॥
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप।
वसन्तो ब्राह्मणो ज्ञेयो वेदयोनिः स उच्यते॥
अग्न्याधेयं तु येनाथ वसन्ते क्रियतेऽनघ।
तस्य श्रीर्ब्रह्मवृद्धिश्च ब्राह्मणस्य विवर्धते॥
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै नृप।
येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्धते।
श्रीः प्रजाः पशवश्चैव वित्तं तेजो बलं यशः॥
शरदृतौ तु वैश्यस्य ह्याधानीयो हुताशनः।
शरद्वात्रं स्वयं वैश्यो वैश्ययोनिः स उच्यते॥
शरद्याधानमेवं वै क्रियते येन पाण्डव।
तस्यापि श्रीः प्रजायुश्च पशवोऽर्थश्च वर्धते॥
रसाः स्नेहास्तथा गन्धा रत्नानि मणयस्तथा।
काञ्चनानि च लोहानि ह्यग्निहोत्रकृतेऽभवन्॥
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं च तत्सर्वमग्निहोत्रकृते कृतम्॥
छन्दः शिक्षा च कल्पश्च तथा व्याकरणानि च।
शास्त्रं ज्योतिर्निरुक्तं चाप्यग्निहोत्रकृते कृतम्॥
इतिहासपुराणं च गाथाश्चोपनिषत् तथा।
आथर्वणानि कर्माणि चाग्निहोत्रकृते कृतम्॥
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मकम्।
कालस्य वेदनार्थं तु ज्योतिर्ज्ञानं पुरानघ॥
ऋग्यजुःसाममन्त्राणां श्लोकतत्त्वार्थचिन्तनात्।
प्रत्यापत्तिविकल्पानां छन्दोज्ञानं प्रकल्पितम्॥
वर्णाक्षरपदार्थानां संधिलिङ्गं प्रकीर्तितम्।
नामधातुविवेकार्थं पुरा व्याकरणं स्मृतम्॥
यूपवेद्यध्वरार्थं तु प्रोक्षणश्रपणाय तु।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम्॥
यज्ञपात्रपवित्रार्थं द्रव्यसम्भारणाय च।
सर्वयज्ञविकल्पाय पुरा कल्पं प्रकीर्तितम्॥
नामधातुविकल्पानां तत्त्वार्थनियमाय च।
सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम्॥
वेद्यर्थं पृथिवी सृष्टा सम्भारार्थं तथैव च।
इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम्॥
गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च।
सुवर्णं रजतं चैव पात्रकुम्भार्थमेव च॥
दर्भाः संस्तरणार्थं तु रक्षसां रक्षणाय च।
पूजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः॥
क्षत्रियाः रक्षणार्थं तु वैश्या वार्तानिमित्ततः।
शुश्रूषार्थं त्रयाणां वै शूद्राः सृष्टाः स्वयम्भुवा॥
यथोक्तमग्निहोत्राणां शुश्रूषन्ति च ये द्विजाः।
तैर्दत्तं सहुतं चेष्टं दत्तमध्यापितं भवेत्॥
एवमिष्टं च पूर्तं च यद् विप्रैः क्रियते नृप।
तत् सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम्॥
मया स्थापितमादित्ये लोकस्य सुकृतं हि तत्।
धारयेद् यत् सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम्॥
तस्मादप्रोषितैर्नित्यमग्निहोत्रं द्विजातिभिः।
होतव्यं विधिवद् राजन्नूर्ध्वामिच्छन्ति ये गतिम्॥
आत्मवन्नावमन्तव्यमग्निहोत्रं युधिष्ठिर।
न त्याज्यं क्षणमप्येतदग्निहोत्रं युधिष्ठिर॥
बालाहिताग्नयो ये च शूद्रान्नाद् विरताः सदा।
क्रोधलोभविनिर्मुक्ताः प्रातःस्नानपरायणाः।
यथोक्तमग्निहोत्रं वै जुह्वते विजितेन्द्रियाः॥
आतिथेयाः सदा सौम्या द्विकालं मत्परायणाः।
ते यान्त्यपुनरावृत्तिं भित्त्वा चादित्यमण्डलम्॥
श्रुतिं केचिन्निन्दमानाः श्रुतिं दूष्यन्त्यबुद्धयः।
प्रमाणं न च कुर्वन्ति ये यान्तीहापि दुर्गतिम्॥
प्रमाणमितिहासं च वेदान् कुर्वन्ति ये द्विजाः।
ते यान्त्यमरसायुज्यं नित्यमास्तिक्यबुद्धयः॥

[ चान्द्रायणव्रतविधिः प्रायश्चित्तरूपेण तत्करणस्य विधेर्महिम्नश्च वर्णनम् ]

युधिष्ठिर उवाच

चक्रायुध नमस्तेऽस्तु देवेश गरुडध्वज।
चान्द्रायणविधिं पुण्यमाख्याहि भगवन् मम॥

श्रीभगवानुवाच

श्रृणु पाण्डव तत्त्वेन सर्वपापप्रणाशनम्।
पापिनो येन शुद्ध्यन्ति तत् ते वक्ष्यामि सर्वशः॥
ब्राह्मणः क्षत्रियो वापि वैश्यो वा चरितव्रतः।
यथावत् कर्तुकामो वै तस्यैवं प्रथमा क्रिया॥
शोधयेत् तु शरीरं स्वं पञ्चगव्येन यन्त्रितः।
सशिरः कृष्णपक्षस्य ततः कुर्वीत वापनम्॥
शुक्लवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम्।
पालाशदण्डमादाय ब्रह्मचारिव्रते स्थितः॥
कृतोपवासः पूर्वं तु शुक्लप्रतिपदि द्विजः।
नदीसंगमतीर्थेषु शुचौ देशे गृहेऽपि वा॥
आघारावाज्यभागौ च प्रणवं व्याहृतीस्तथा।
वारुणं चैव पञ्चैव हुत्वा सर्वान् यथाक्रमम्॥
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे।
विश्वेभ्यो हि च देवेभ्यः सप्रजापतये तथा॥
षडुक्त्वा जुहुयात् पश्चात् प्रायश्चित्ताहुतिं द्विजः।
अतः समापयेदग्निं शान्तिं कृत्वाथ पौष्टिकीम्॥
प्रणम्य चाग्निं सोमं च भस्म धृत्वा यथाविधि।
नदीं गत्वा विशुद्धात्मा सोमाय वरुणाय च।
आदित्याय नमस्कृत्वा ततः स्नायात् समाहितः॥
उत्तीर्योदकमाचम्य चासीनः पूर्वतोमुखः।
प्राणायामं ततः कृत्वा पवित्रैरभिषेचनम्॥
आचान्तस्त्वभिवीक्षेत ऊर्ध्वबाहुर्दिवाकरम्।
कृताञ्जलिपुटः स्थित्वा कुर्याच्चैव प्रदक्षिणम्॥
नारायणं वा रुद्रं वा ब्रह्माणमथवापि वा।
वारुणं मन्त्रसूक्तं वा प्राग्भोजनमथापि वा॥
वीरघ्नमृषभं वापि तथा चाप्यघमर्षणम्।
गायत्रीं मम देवीं वा सावित्रीं वा जपेत् ततः।
शतं वाष्टशतं वापि सहस्रमथवा परम्॥
ततो मध्याह्नकाले वै पायसं यावकं हि वा।
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः॥
पात्रं तु सुसमादाय सौवर्णं राजतं तु वा।
ताम्रं वा मृण्मयं वापि औदुम्बरमथापि वा॥
वृक्षाणां यज्ञियानां तु पर्णैरार्द्रैरकुत्सितैः।
पुटकेन तु गुप्तेन चरेद् भैक्षं समाहितः॥
ब्राह्मणानां गृहाणां तु सप्तानां नापरं व्रजेत्।
गोदोहमात्रं तिष्ठेत् तु वाग्यतः संयतेन्द्रियः॥
न हसेन्न च वीक्षेत नाभिभाषेत वा स्त्रियम्॥
दृष्ट्वा मूत्रं पुरीषं वा चाण्डालं वा रजस्वलाम्।
पतितं च तथा श्वानमादित्यमवलोकयेत्॥
ततस्त्वावसथं प्राप्तो भिक्षां निक्षिप्य भूतले।
प्रक्षाल्य पादावाजान्वोर्हस्तावाकूर्परं पुनः।
आचम्य वारिणा तेन वह्निं विप्रांश्च पूजयेत्॥
पञ्च सप्ताथवा कुर्याद् भागान् भैक्षस्य तस्य वै।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत्॥
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च।
विश्वेभ्यश्चैव देवेभ्यो दद्यादन्नं यथाक्रमम्॥
अवशिष्टमथैकं तु वक्त्रमात्रं प्रकल्पयेत्।
अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रयेत्।
अङ्गुलीभिस्त्रिभिः पिण्डं प्राश्नीयात् प्राङ्मुखः शुचिः॥
यथा च वर्धते सोमो ह्रसते च यथा पुनः।
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिने दिने॥
त्रिकालं स्नानमस्योक्तं द्विकालमथवा सकृत्।
ब्रह्मचारी सदा वापि न च वस्त्रं प्रपीडयेत्॥
स्थाने न दिवसं तिष्ठेद् रात्रौ वीरासनं व्रजेत्।
भवेत् स्थण्डिलशायी वाप्यथवा वृक्षमूलिकः॥
वल्कलं यदि वा क्षौमं शाणं कार्पासकं तथा।
आच्छादनं भवेत् तस्य वस्त्रार्थं पाण्डुनन्दन॥
एवं चान्द्रायणे पूर्णे मासस्यान्ते प्रयत्नवान्।
ब्राह्मणान् भोजयेद् भक्त्या दद्याच्चैव च दक्षिणाम्।
चान्द्रायणेन चीर्णेन यत् कृतं तेन दुष्कृतम्॥
तत् सर्वं तत्क्षणादेव भस्मीभवति काष्ठवत्॥
ब्रह्महत्या च गोहत्या सुवर्णस्तैन्यमेव च।
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः॥
एवमन्यानि पापानि पातकीयानि यानि च।
चान्द्रायणेन नश्यन्ति वायुना पांसवो यथा॥
अनिर्दशाया गोः क्षीरमौष्ट्रमाविकमेव च।
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायणं चरेत्॥
उपपातकिनश्चान्नं पतितान्नं तथैव च।
शूद्रस्योच्छेषणं चैव भुक्त्वा चान्द्रायणं चरेत्॥
आकाशस्थं तु हस्तस्थमधःस्रस्तं तथैव च।
परहस्तस्थितं चैव भुक्त्वा चान्द्रायणं चरेत्॥
अथाग्रे दिधिषोरन्नं दिधिषूपपतेस्तथा।
परिवेत्तुस्तथा चान्नं परिवित्तान्नमेव च॥
कुण्डान्नं गोलकान्नं च देवलान्नं तथैव च।
तथा पुरोहितस्यान्नं भुक्त्वा चान्द्रायणं चरेत्॥
सुरासवं विषं सर्पिर्लाक्षा लवणमेव च।
तैलं चापि च विक्रीणन् द्विजश्चान्द्रायणं चरेत्॥
एकोद्दिष्टं तु यो भुङ्क्ते जनमध्यगतोऽपि यः।
भिन्नभाण्डेषु यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत्॥
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह।
कन्यया सह यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत्॥
उच्छिष्टं स्थापयेद् विप्रो यो मोहाद् भोजनान्तरे।
दद्याद् वा यदि वा मोहाद् द्विजश्चान्द्रायणं चरेत्॥

तुम्बकोशातकं चैव पलाण्डुं गृञ्जनं तथा ।
छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ॥
उदक्यया शुना वापि चाण्डालैर्वा द्विजोत्तमः ।
दृष्टमन्नं तु भुञ्जानो द्विजश्चान्द्रायणं चरेत् ॥
एतत् पुरा विशुद्ध्यर्थमृषिभिश्चरितं व्रतम् ।
पावनं सर्वभूतानां पुण्यं पाण्डव चोदितम् ॥
यथोक्तमेतद् यः कुर्याद् द्विजः पापप्रणाशनम् ।
स दिवं याति पूतात्मा निर्मलादित्यसंनिभः ॥

[ सर्वहितकृद्धर्मवर्णनं द्वादशीव्रतस्य माहात्म्यं युधिष्ठिरेण भगवतः स्तवनं च ]

*युधिष्ठिर उवाच*

सर्वभूतपते श्रीमन् सर्वभूतनमस्कृत ।
सर्वभूतहितं धर्मं सर्वज्ञ कथयस्व नः ॥

*श्रीभगवानुवाच*

यद् दरिद्रजनस्यापि स्वर्ग्यं सुखकरं भवेत् ।
सर्वपापप्रशमनं तच्छृणुष्व युधिष्ठिर ॥
एकभुक्तेन वर्तेत नरः संवत्सरं तु यः ।
ब्रह्मचारी जितक्रोधो ह्यधःशायी जितेन्द्रियः ॥
शुचिश्च स्नातो ह्यव्यग्रः सत्यवागनसूयकः ।
अर्चन्नेव तु मां नित्यं मद्गतेनान्तरात्मना ।
संध्ययोस्तु जपेन्नित्यं मद्गायत्रीं समाहितः ॥
नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ।
विप्रमग्रासने कृत्वा यावकं भैक्षमेव वा ॥
भुक्त्वा तु वाग्यतो भूमावाचान्तस्य द्विजन्मनः ।
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणौ स्पृशेत्॥
मासे मासे समासे तु भोजयित्वा द्विजाञ्छुचीन्।
संवत्सरे ततः पूर्णे दद्यात् तु व्रतदक्षिणाम् ॥
नवनीतमयीं गां वा तिलधेनुमथापि वा ।
विप्रहस्तच्युतैस्तोयैः सहिरण्यैः समुक्षितः ।
तस्य पुण्यफलं राजन् कथ्यमानं मया शृणु ॥
दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोऽपि वा ।
तद् विनश्यति तस्याशु नात्र कार्या विचारणा ॥

*युधिष्ठिर उवाच*

सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्च निःश्रेयसं लोके तद् भवान् वक्तुमर्हति ॥

*श्रीभगवानुवाच*

शृणु राजन् मया पूर्वं यथा गीतं तु नारदे ।
तथा ते कथयिष्यामि मद्भक्ताय युधिष्ठिर ॥
यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ।
उपवासव्रतं कुर्यात् त्रिकालं चार्चयंस्तु माम् ।
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ॥
पर्वद्वयं च द्वादश्यौ श्रवणं च नराधिप ।
मत्पञ्चमीति विख्याता मत्प्रिया च विशेषतः॥

तस्मात् तु ब्राह्मणश्रेष्ठैर्मन्निवेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियार्थं विशेषतः ॥
द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीतिं यास्यामि नरपुङ्गव ॥
अहोरात्रेण द्वादश्यां मार्गशीर्षेण केशवम् ।
उपोष्य पूजयेद् यो मां सोऽश्वमेधफलं लभेत् ॥
द्वादश्यां पुष्यमासे तु नाम्ना नारायणं तु माम् ।
उपोष्य पूजयेद् यो मां वाजिमेधफलं लभेत् ॥
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद् यः समाप्नोति राजसूयफलं नृप ॥
द्वादश्यां फाल्गुने मासि गोविन्दाख्यमुपोष्य माम् ।
पूजयेद् यः समाप्नोति ह्यतिरात्रफलं नृप ॥
द्वादश्यां मासि चैत्रे तु मां विष्णुं समुपोष्य यः ।
पूजयंस्तदवाप्नोति पौण्डरीकस्य यत् फलम् ॥
द्वादश्यां मासि वैशाखे मधुसूदनसंज्ञितम् ।
उपोष्य पूजयेद् यो मां सोऽग्निष्टोमस्य पाण्डव ॥
द्वादश्यां ज्येष्ठमासे तु मामुपोष्य त्रिविक्रमम् ।
अर्चयेद् यः समाप्नोति गवां मेधफलं नृप ॥
आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य यः ।
नरमेधस्य स फलं प्राप्नोति भरतर्षभ ॥
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
पूजयेद् यः समाप्नोति पञ्चयज्ञफलं नृप ॥
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य स समाप्नोति सौत्रामणिफलं नृप ॥
द्वादश्यामाश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।
अर्चयेद् यः समाप्नोति गोसहस्रफलं नृप ॥
द्वादश्यां कार्त्तिके मासि मां दामोदरसंज्ञितम् ।
उपोष्य पूजयेद् यस्तु सर्वक्रतुफलं नृप ॥
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन ।
यत् फलं पूर्वमुद्दिष्टं तस्यार्धं लभते नृप ॥
श्रावणेऽप्येवमेवं मामर्चयेद् भक्तिमान् नरः ।
मम सालोक्यमाप्नोति नात्र कार्या विचारणा॥
मासे मासे समभ्यर्च्य क्रमशो मामतन्द्रितः ।
पूर्णे संवत्सरे कुर्यात् पुनः संवत्सरं तु माम् ॥
एवं द्वादशवर्षं यो मद्भक्तो मत्परायणः ।
अविघ्नमर्चयानस्तु मम सायुज्यमाप्नुयात् ॥
अर्चयेत् प्रीतिमान् यो मां द्वादश्यां वेदसंहिताम् ।
स पूर्वोक्तफलं राजँल्लभते नात्र संशयः ॥
गन्धं पुष्पं फलं तोयं पत्रं वा मूलमेव वा ।
द्वादश्यां मम यो दद्यात् तत्समो नास्ति मत्प्रियः ॥
एतेन विधिना सर्वे देवाः शक्रपुरोगमाः ।
मद्भक्ता नरशार्दूल स्वर्गलोकं तु भुञ्जते ॥

वैशम्पायन उवाच

एवं वदति देवेशे केशवे पाण्डुनन्दनः।
कृताञ्जलिः स्तोत्रमिदं भक्त्या धर्मात्मजोऽब्रवीत्॥
सर्वलोकेश देवेश हृषीकेश नमोऽस्तु ते।
सहस्रशिरसे नित्यं सहस्राक्ष नमोऽस्तु ते॥
त्रयीमय त्रयीनाथ त्रयीस्तुत नमो नमः।
यज्ञात्मन् यज्ञसम्भूत यज्ञनाथ नमो नमः॥
चतुर्मूर्ते चतुर्बाहो चतुर्व्यूह नमो नमः।
लोकात्मँल्लोककृन्नाथ लोकावास नमो नमः॥
सृष्टिसंहारकर्त्रे ते नरसिंह नमो नमः।
भक्तप्रिय नमस्तेऽस्तु कृष्ण नाथ नमो नमः॥
लोकप्रिय नमस्तेऽस्तु भक्तवत्सल ते नमः।
ब्रह्मावास नमस्तेऽस्तु ब्रह्मनाथ नमो नमः॥
रुद्ररूप नमस्तेऽस्तु रुद्रकर्मरताय ते।
पञ्चयज्ञ नमस्तेऽस्तु सर्वयज्ञ नमो नमः॥
कृष्णप्रिय नमस्तेऽस्तु कृष्ण नाथ नमो नमः।
योगिप्रिय नमस्तेऽस्तु योगिनाथ नमो नमः॥
हयवक्त्र नमस्तेऽस्तु चक्रपाणे नमो नमः।
पञ्चभूत नमस्तेऽस्तु पञ्चायुध नमो नमः॥

वैशम्पायन उवाच

भक्तिगद्गदया वाचा स्तुवत्येवं युधिष्ठिरे।
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत्॥
निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम्।
वक्तुमेव नरश्रेष्ठ धर्मपुत्रं प्रचक्रमे॥

श्रीभगवानुवाच

अन्यवत् किमिदं राजन् मां स्तौषि नरपुङ्गव।
तिष्ठ प्रच्छ यथापूर्वं धर्मपुत्र युधिष्ठिर॥

युधिष्ठिर उवाच

इदं च धर्मसम्पन्नं वक्तुमर्हसि मानद।
कृष्णपक्षेषु द्वादश्यामर्चनीयः कथं भवेत्॥

श्रीभगवानुवाच

शृणु राजन् यथा पूर्वं तत् सर्वं कथयामि ते।
परमं कृष्णद्वादश्यामर्चनायां फलं मम॥
एकादश्यामुपोष्याथ द्वादश्यामर्चयेत् तु माम्।
विप्रानपि यथालाभं पूजयेद् भक्तिमान् नरः॥
स गच्छेद् दक्षिणामूर्तिं मां वा नात्र विचारणा।
चन्द्रसालोक्यमथवा ग्रहनक्षत्रपूजितः॥

[ विषुवयोगे ग्रहणादौ च दानस्य महिमा, अश्वत्थस्य माहात्म्यं तीर्थीभूतानां गुणानां प्रशंसनमुत्तमं प्रायश्चित्तं च ]

युधिष्ठिर उवाच

देव किं फलमाख्यातं विषुवेष्वमरेश्वर।
सूर्येन्दूपप्लवे चैव वक्तुमर्हसि तत् फलम्॥

श्रीभगवानुवाच

शृणुष्व राजन् विषुवे सोमार्कग्रहणेषु च।
व्यतीपातेऽयने चैव दानं स्यादक्षयं फलम्॥
राजन्नयनयोर्मध्ये विषुवं सम्प्रचक्षते।
समे रात्रिदिने तत्र संध्यायां विषुवे नृप॥
ब्रह्माहं शङ्करश्चापि तिष्ठामः सहिताः सकृत्।
क्रियाकरणकार्याणामेकीभावत्वकारणात्॥
अस्माकमेकीभूतानां निष्कलं परमं पदम्।
तन्मुहूर्तं परं पुण्यं राजन् विषुवसंज्ञितम्॥
तदेवाद्यक्षरं ब्रह्म परं ब्रह्मेति कीर्तितम्।
तस्मिन् मुहूर्ते सर्वे तु चिन्तयन्ति परं पदम्॥
देवाश्च वसवो रुद्राः पितरश्चाश्विनौ तथा।
साध्याश्च विश्वे गन्धर्वाः सिद्धा ब्रह्मर्षयस्तथा॥
सोमादयो ग्रहाश्चैव सरितः सागरास्तथा।
मरुतोऽप्सरसो नागा यक्षराक्षसगुह्यकाः॥
एते चान्ये च राजेन्द्र विषुवे संयतेन्द्रियाः।
सोपवासाः प्रयत्नेन भवन्ति ध्यानतत्पराः॥
अन्नं गावस्तिलान् भूमिं कन्यादानं तथैव च।
गृहमायतनं धान्यं वाहनं शयनं तथा॥
यच्चान्यच्च मया प्रोक्तं तत् प्रयच्छ युधिष्ठिर।
दीयते विषुवेष्वेवं श्रोत्रियेभ्यो विशेषतः॥
तस्य दानस्य कौन्तेय क्षयं नैवोपपद्यते।
चन्द्रसूर्यग्रहे व्योम्नि मम वा शङ्करस्य वा।
गायत्रीं मामिकां वापि जपेद् यः शङ्करस्य वा॥
शङ्खतूर्यस्वनैश्चैव कांस्यघण्टास्वनैरपि।
कारयेत् तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु॥
गान्धर्वैर्होमजप्यैस्तु जप्यैरुत्कृष्टनामभिः।
दुर्बलोऽपि भवेद् राहुः सोमश्च बलवान् भवेत्॥
सूर्येन्दूपप्लवे चैव श्रोत्रियेभ्यः प्रदीयते।
तत्सहस्रगुणं भूत्वा दातारमुपतिष्ठति॥
महापातकयुक्तोऽपि यद्यपि स्यान्नरोत्तमः।
निष्पापस्तत्क्षणादेव तेन दानेन जायते॥
चन्द्रसूर्यप्रकाशेन विमानेन विराजता।
याति सोमपुरं रम्यं सेव्यमानोऽप्सरोगणैः॥
यावदक्षाणि तिष्ठन्ति गगने शशिना सह।
तावत् कालं स राजेन्द्र सोमलोके महीयते॥
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर।
वेदवेदाङ्गविद् विप्रः कोटीधनपतिर्भवेत्॥

युधिष्ठिर उवाच

भगवंस्तव गायत्री जप्यते च कथं विभो।
किं वा तस्य फलं देव ममाचक्ष्व सुरेश्वर॥

श्रीभगवानुवाच

द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा।
अयने श्रवणे चैव व्यतीपाते तथैव च॥
अश्वत्थदर्शने चैव तथा मद्दर्शनेऽपि च।
जप्त्वा तु मम गायत्री चाथवाष्टाक्षरं नृप।
अर्जितं दुष्कृतं तस्य नाशयेन्नात्र संशयः॥

युधिष्ठिर उवाच

अश्वत्थदर्शनं चैव किं त्वद्दर्शनसम्मितम्।
एतत् कथय मे देव परं कौतूहलं हि मे॥

श्रीभगवानुवाच

अहमश्वत्थरूपेण पालयामि जगत्त्रयम्।
अश्वत्थो न स्थितो यत्र नाहं तत्र प्रतिष्ठितः॥
यत्राहं संस्थितो राजन्नश्वत्थश्चापि तिष्ठति।
यस्त्वेनमर्चयेद् भक्त्या स मां साक्षात् समर्चति॥
यस्त्वेनं प्रहरेत् कोपान्मामेव प्रहरेत् तु सः।
तस्मात् प्रदक्षिणं कुर्यान्न छिन्द्यादेनमन्वहम्॥
व्रतस्य पारणं तीर्थमार्जवं तीर्थमुच्यते।
देवशुश्रूषणं तीर्थं गुरुशुश्रूषणं तथा॥
पितृशुश्रूषणं तीर्थं मातृशुश्रूषणं तथा।
दाराणां तोषणं तीर्थं गार्हस्थ्यं तीर्थमुच्यते॥
आतिथेयः परं तीर्थं ब्रह्मतीर्थं सनातनम्।
ब्रह्मचर्यं परं तीर्थं त्रेताग्निस्तीर्थमुच्यते॥
मूलं धर्मं तु विज्ञाय मनस्तत्रावधार्यताम्।
गच्छ तीर्थानि कौन्तेय धर्मो धर्मेण वर्धते॥
द्विविधं तीर्थमित्याहुः स्थावरं जङ्गमं तथा।
स्थावराज्जङ्गमं तीर्थं ततो ज्ञानपरिग्रहः॥
कर्मणापि विशुद्धस्य पुरुषस्येह भारत।
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते॥
गुरुतीर्थं परं ज्ञानमतस्तीर्थं न विद्यते।
ज्ञानतीर्थं परं तीर्थं ब्रह्मतीर्थं सनातनम्॥
क्षमा तु परमं तीर्थं सर्वतीर्थेषु पाण्डव।
क्षमावतामयं लोकः परश्चैव क्षमावताम्॥
मानितोऽमानितो वापि पूजितोऽपूजितोऽपि वा।
आक्रुष्टस्तर्जितो वापि क्षमावांस्तीर्थमुच्यते॥
क्षमा यशः क्षमा दानं क्षमा यज्ञः क्षमा दमः।
क्षमाहिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः॥
क्षमा दया क्षमा यज्ञः क्षमयैव धृतं जगत्।
क्षमावान् ब्राह्मणो देवः क्षमावान् ब्राह्मणो वरः॥
क्षमावान् प्राप्नुयात् स्वर्गं क्षमावानाप्नुयाद् यशः।
क्षमावान् प्राप्नुयान्मोक्षं तस्मात् साधुः स उच्यते॥
आत्मा नदी भारत पुण्यतीर्थ-
मात्मा तीर्थं सर्वतीर्थप्रधानम्।
आत्मा यज्ञः सततं मन्यते वै
स्वर्गो मोक्षः सर्वमात्मन्यधीनम्॥
आचारनैर्मल्यमुपागतेन
सत्यक्षमानिस्तुलशीतलेन।
ज्ञानाम्बुना स्नाति हि नित्यमेवं
किं तस्य भूयः सलिलेन तीर्थम्॥

युधिष्ठिर उवाच

भगवन् सर्वपापघ्नं प्रायश्चित्तमदुष्करम्।
त्वद्भक्तस्य सुरश्रेष्ठ मम त्वं वक्तुमर्हसि॥

श्रीभगवानुवाच

रहस्यमिदमत्यर्थमश्राव्यं पापकर्मणाम्।
अधार्मिकाणामश्राव्यं प्रायश्चित्तं ब्रवीमि ते॥
पावनं ब्राह्मणं दृष्ट्वा मद्गतेनान्तरात्मना।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत्॥
प्रदक्षिणं च यः कुर्यात् पुनरष्टाक्षरेण तु।
तेन तुष्टेन विप्रेण तत्पापं क्षपयाम्यहम्॥
यत्र कृष्णां वराहस्य मृत्तिकां शिरसा वहन्।
प्राणायामशतं कृत्वा नरः पापैः प्रमुच्यते॥
दक्षिणावर्तशङ्खाद् वा कपिलाशृङ्गतोऽपि वा।
प्राक्स्रोतसं नदीं गत्वा ममायतनसंनिधौ॥
सलिलेन तु यः स्नायात् सकृदेव रविग्रहे।
तस्य यत् संचितं पापं तत्क्षणादेव नश्यति॥
पिबेत् तु पञ्चगव्यं यः पौर्णमास्यामुपोष्य तु।
तस्य नश्यति तत् पापं यत् पापं पूर्वसंचितम्॥
तथैव ब्रह्मकूर्चं तु समन्त्रं तु पृथक् पृथक्।
मासि मासि पिबेद् यस्तु तस्य पापं प्रणश्यति॥
पात्रं च ब्रह्मकूर्चं च शृणु तत्र च भारत।
पलाशं पद्मपत्रं च ताम्रं वाथ हिरण्मयम्।
सादयित्वा तु गृह्णीयात् तत् तु पात्रमुदाहृतम्॥
गायत्र्या गृह्यते मूत्रं गन्धद्वारेति गोमयम्।
आप्यायस्वेति च क्षीरं दधि क्राव्णेति वै दधि॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्।
आपो हिष्ठेत्यृचा गृह्य यवचूर्णं यथाविधि॥
ब्रह्मणे च यथा हुत्वा समिद्धे च हुताशने।
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु॥
उद्धृत्य प्रणवेनैव पिबेत् तु प्रणवेन तु।
महतापि स पापेन त्वचेवाहिर्विमुच्यते॥
भद्रं न इति यः पादं पठन्नृक्संहितां तदा।
अन्तर्जले वाभ्यादित्ये तस्य पापं प्रणश्यति॥
मम सूक्तं जपेद् यस्तु नित्यं मद्गतमानसः।
न पापेन स लिप्येत पद्मपत्रमिवाम्भसा॥

[ उत्तमाधमब्राह्मणानां लक्षणं भगवद्भक्तानां गवां पिप्पलस्य च माहात्म्यम् ]

युधिष्ठिर उवाच

कीदृशा ब्राह्मणाः पुण्या भावशुद्धाः सुरेश्वर।
यत्कर्म सफलं नेति कथयस्व ममानघ॥

श्रीभगवानुवाच

शृणु पाण्डव तत् सर्वं ब्राह्मणानां यथाक्रमम्।
सफलं निष्फलं चैव तेषां कर्म ब्रवीमि ते॥
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम्।
वल्कलाजिनसंवासो ब्रह्मचर्याभिषेचनम्॥
अग्निहोत्रं गृहे वासः स्वाध्यायं दारसत्क्रिया।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः॥
क्षान्तं दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम्।
तमग्र्यं ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः॥
अग्निहोत्रव्रतपरान् स्वाध्यायनिरताञ्शुचीन्।
उपवासरतान् दान्तांस्तान् देवा ब्राह्मणा विदुः॥
न जात्या पूजितो राजन् गुणाः कल्याणकारणाः।
मनश्शौचं कर्मशौचं कुलशौचं च भारत।
शरीरशौचं वाक्छौचं शौचं पञ्चविधं स्मृतम्॥
पञ्चस्वेतेषु शौचेषु हृदि शौचं विशिष्यते।
हृदयस्य च शौचेन स्वर्गं गच्छन्ति मानवाः॥
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रयैः।
वर्णसंकरकर्ता च ब्राह्मणो वृषलैः समः॥
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः।
विकर्मसेवी कौन्तेय स वै वृषल उच्यते॥
वृषो हि धर्मो विज्ञेयस्तस्य यः कुरुते लयम्।
वृषलं तं विदुर्देवा निकृष्टं श्वपचादपि॥
स्तुतिभिर्ब्रह्मगीताभिर्यः शूद्रं स्तौति मानवः।
न तु मां स्तौति पापात्मा स तु चण्डालतः समः॥
श्वदृतौ तु यथा क्षीरं ब्रह्म वै वृषले तथा।
दुष्टतामेति तत् सर्वं शुना लीढं हविर्यथा॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश॥
यान्युक्तानि मया सम्यग् विद्यास्थानानि भारत।
उत्पन्नानि पवित्राणि भुवनार्थं तथैव च॥
तस्मात् तानि न शूद्रस्य स्पृष्टव्यानि युधिष्ठिर।
सर्वं च शूद्रसंस्पृष्टमपवित्रं न संशयः॥
लोके त्रीण्यपवित्राणि पञ्चामेध्यानि भारत।
श्वा च शूद्रः श्वपाकश्च अपवित्राणि पाण्डव॥
गायकः कुक्कुटो यूपो ह्युदक्या वृषलीपतिः।
पञ्चैते त्वमेध्याश्च स्प्रष्टव्या न कदाचन।
स्पृष्ट्वैतानष्ट वै विप्रः सचैलो जलमाविशेत्॥

मद्भक्ताञ्शूद्रसामान्यादवमन्यन्ति ये नराः।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः॥
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान्।
अवमानात् पतन्त्येव नरके रौरवे नराः॥
मम भक्तस्य भक्तेषु प्रीतिरभ्यधिका मम।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः॥
कीटपक्षिमृगाणां च मयि संन्यस्तचेतसाम्।
ऊर्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनां नृणाम्॥
पत्रं वाप्यथवा पुष्पं फलं वाप्यप एव वा।
ददाति मम शूद्रो यच्छिरसा धारयामि तत्॥
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम्।
मामर्चयन्ति ये विप्रा मत्सायुज्यं व्रजन्ति ते॥
मद्भक्तानां हितायैव प्रादुर्भावः कृतो मया।
प्रादुर्भावकृता काचिदर्चनीया युधिष्ठिर॥
आसामन्यतमां मूर्तिं यो मद्भक्त्या समर्चति।
तेनैव परितुष्टोऽहं भविष्यामि न संशयः॥
मृदा च मणिरत्नैश्च ताम्रेण रजतेन च।
कृत्वा प्रतिकृतिं कुर्यादर्चनां काञ्चनेन वा।
पुण्यं दशगुणं विद्यादेतेषामुत्तरोत्तरम्॥
जयकामो भवेद् राजा विद्याकामो द्विजोत्तमः।
वैश्यो वा धनकामस्तु शूद्रः सुखफलप्रियः।
सर्वकामाः स्त्रियो वापि सर्वान् कामानवाप्नुयुः॥

युधिष्ठिर उवाच

कीदृशानां तु शूद्राणां नानुगृह्णासि चार्चनम्।
उद्वेगस्तव कस्माद्धि तन्मे ब्रूहि सुरेश्वर॥

श्रीभगवानुवाच

अव्रतेनाप्यभक्तेन स्पृष्टां शूद्रेण चार्चनाम्।
तां वर्जयामि राजेन्द्र श्वपाकविहितामिव॥
तन्वहं शङ्करश्चापि गावो विप्रास्तथैव च।
अश्वत्थोऽमररूपं हि त्रयमेतद् युधिष्ठिर॥
एतत्त्रयं हि मद्भक्तो नावमन्येत कर्हिचित्।
अश्वत्थो ब्राह्मणा गावो मन्मयास्तारयन्ति हि।
तस्मादेतत् प्रयत्नेन त्रयं पूजय पाण्डव॥

[ भगवत उपदेशस्योपसंहारस्तस्य द्वारकागमनं च ]

युधिष्ठिर उवाच

देशान्तरगते विप्रे संयुक्ते कालधर्मणा।
शरीरनाशे सम्प्राप्ते कथं प्रेतत्वकल्पना॥

श्रीभगवानुवाच

श्रूयतामाहिताग्नेस्तु तथाभूतस्य संस्क्रिया।
पालाशवृन्दैः प्रतिमा कर्तव्या कल्पचोदिता॥
त्रीणि षष्टिशतान्याहुरस्थीन्यस्य युधिष्ठिर।
तेषां विकल्पना कार्या यथाशास्त्रं विनिश्चितम्॥

युधिष्ठिर उवाच

विशेषतीर्थं सर्वेषामशक्तानामनुग्रहात् ।
भक्तानां तारणार्थं तु वक्तुमर्हसि धर्मतः ॥

श्रीभगवानुवाच

पावनं सर्वतीर्थानां सत्यं गायन्ति सामगाः ।
सत्यस्य वचनं तीर्थमहिंसा तीर्थमुच्यते ॥
तपस्तीर्थं दया तीर्थं शीलं तीर्थं युधिष्ठिर ।
अल्पसंतोषकं तीर्थं नारी तीर्थं पतिव्रता ॥
संतुष्टो ब्राह्मणस्तीर्थं ज्ञानं वा तीर्थमुच्यते ।
मद्भक्ताः सततं तीर्थं शङ्करस्य विशेषतः ॥
यतयस्तीर्थमित्येवं विद्वांसस्तीर्थमुच्यते ।
शरण्यपुरुषस्तीर्थमभयं तीर्थमुच्यते ॥
त्रैलोक्येऽस्मिन् निरुद्विग्नो न बिभेमि कुतश्चन ।
न दिवा यदि वा रात्रावुद्वेगः शूद्रलङ्घनात् ॥
न भयं देवदैत्येभ्यो रक्षोभ्यश्चैव मे नृप ।
शूद्रवक्त्राच्च्युतं ब्रह्म भयं तु मम सर्वदा ॥
तस्मात् सप्रणवं शूद्रो मन्नामापि न कीर्तयेत् ।
प्रणवं हि परं लोके ब्रह्म ब्रह्मविदो विदुः ॥
द्विजशुश्रूषणं धर्मः शूद्राणां भक्तितो मयि ।
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ।
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ॥
सृष्ट्वा पितामहः शूद्रमभिभूतं तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान् ।
नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतं मूर्ध्ना गृह्णामि शूद्रतः ॥
अग्रजो वापि यः कश्चित् सर्वपापसमन्वितः ।
यदि मां सततं ध्यायेत् सर्वपापैः प्रमुच्यते ॥
विद्याविनयसम्पन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्तिं न कुर्वन्ति चाण्डालसदृशा हि ते ॥
वृथा दानं वृथा तप्तं वृथा चेष्टं वृथा हुतम् ।
वृथाऽऽतिथ्यं च तत् तस्य यो न भक्तो मम द्विजः ॥
स्थावरे जङ्गमे वापि सर्वभूतेषु पाण्डव ।
समत्वेन यदा कुर्यान्मद्भक्तो मित्रशत्रुषु ॥
आनृशंस्यमहिंसा च यथा सत्यं तथाऽऽर्जवम् ।
अद्रोहश्चैव भूतानां मद्गतानां व्रतं नृप ॥
नम इत्येव यो ब्रूयान्मद्भक्तं श्रद्धयान्वितः ।
तस्याक्षयाऽभवँल्लोकाः श्वपाकस्यापि पार्थिव ॥
किं पुनर्ये यजन्ते मां सदारं विधिपूर्वकम् ।
मद्भक्ता मद्गतप्राणाः कथयन्तश्च मां सदा ॥
बहुवर्षसहस्राणि तपस्तपति यो नरः ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥
मामेव तस्माद् राजेन्द्र ध्यायन् नित्यमतन्द्रितः ।
अवाप्स्यसि ततः सिद्धिं द्रक्ष्यत्येव परं पदम् ॥
ऋग्वेदेनैव होता च यजुषाध्वर्युरेव च ।
सामवेदेन चोद्गाता पुण्येनाभिष्टुवन्ति माम् ॥
अथर्वशिरसा चैव नित्यमाथर्वणा द्विजाः ।
स्तुवन्ति सततं ये मां ते वै भागवताः स्मृताः ॥
वेदाधीनाः सदा यज्ञा यज्ञाधीनास्तु देवताः ।
देवताः ब्राह्मणाधीनास्तस्माद् विप्रास्तु देवताः ॥
अनाश्रित्योच्छ्रयं नास्ति मुख्यमाश्रयमाश्रयेत् ।
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ॥
ब्रह्मा मामाश्रितो राजन् नाहं कंचिदुपाश्रितः ।
ममाश्रयो न कश्चित् तु सर्वेषामाश्रयो ह्यहम् ॥
एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ।
धर्मप्रियस्य ते नित्यं राजन्नेवं समाचर ॥
इदं पवित्रमाख्यानं पुण्यं वेदेन सम्मितम् ।
यः पठेन्मामकं धर्ममहन्यहनि पाण्डव ॥
धर्मोऽपि वर्धते तस्य बुद्धिश्चापि प्रसीदति ।
पापक्षयमुपेत्यैवं कल्याणं च विवर्धते ॥
एतत् पुण्यं पवित्रं च पापनाशनमुत्तमम् ।
श्रोतव्यं श्रद्धया युक्तैः श्रोत्रियैश्च विशेषतः ॥
श्रावयेद् यस्त्विदं भक्त्या प्रयतोऽथ शृणोति वा ।
स गच्छेन्मम सायुज्यं नात्र कार्या विचारणा ॥
यश्चेमं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः ।
पितरस्तस्य तृप्यन्ति यावदाभूतसम्प्लवम् ॥

वैशम्पायन उवाच

श्रुत्वा भागवतान् धर्मान् साक्षाद् विष्णोर्जगद्गुरोः ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुताः कथाः ॥
ऋषयः पाण्डवाश्चैव प्रणेमुस्तं जनार्दनम् ।
पूजयामास गोविन्दं धर्मपुत्रः पुनः पुनः ॥
देवा ब्रह्मर्षयः सिद्धा गन्धर्वाप्सरसस्तथा ।
ऋषयश्च महात्मानो गुह्यका भुजगास्तथा ॥
बालखिल्या महात्मानो योगिनस्तत्त्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥
कौतूहलसमायुक्ता भगवद्भक्तिमागताः ।
श्रुत्वा तु परमं पुण्यं वैष्णवं धर्मशासनम् ॥
विमुक्तपापाः पूतास्ते संवृत्तास्तत्क्षणेन तु ।
प्रणम्य शिरसा विष्णुं प्रतिनन्द्य च ताः कथाः ॥
द्रष्टारो द्वारकायां वै वयं सर्वे जगद्गुरुम् ।
इति प्रहृष्टमनसो ययुर्देवगणैः सह ।
सर्वे ऋषिगणा राजन् ययुः स्वं स्वं निवेशनम् ॥
गतेषु तेषु सर्वेषु केशवः केशिहा हरिः ।
सस्मार दारुकं राजन् स च सात्यकिना सह ।
समीपस्थोऽभवत् सूतो याहि देवेति चाब्रवीत् ॥

